॥ श्रीः ॥

# काव्यमाला ।

नाम

नानाविधप्राचीनकाव्यनाटकचम्पूभाणप्रहसन-
च्छन्दोलंकारादिसाहित्यग्रन्थानां
संग्रहः ।

## चतुर्दशो गुच्छकः ।


जयपुरमहाराजाश्रितेन महामहोपाध्यायपण्डितश्रीदुर्गाप्रसाद-
तनयेन पण्डितकेदारनाथेन, मुम्बापुरवासिना पणशी-
करोपाह्वलक्ष्मणतनुजनुषा वासुदेवशर्मणा च
संशोधितः ।



स च

मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतः ।

१९०६.




मूल्यमेको रूप्यकः ।

# अनुक्रमणिका ।







# काव्यमाला।

## काश्मीरकमहाकविश्रीकल्हणकृतम्
## अर्धनारीश्वरस्तोत्रम्।

भालं वह्निशिखाङ्कितं दधदधिश्रोत्रं वहन्संभृत-
क्रीडत्कुण्डलि जृम्भितं जलधिजच्छायाच्छकण्ठच्छविः।
वक्षो विभ्रदहीनकञ्चुकचितं यद्धाङ्गनार्धस्य वो
भागः पुंगवलक्ष्मणोऽस्तु यशसे वामोऽथवा दक्षिणः॥ १॥
वामे साञ्जनमक्षि दक्षिणदिशि श्यामायमानो गलः
पाणौ तिष्ठति दर्पणोऽत्र मुकुटेऽमुत्र स्थितश्चन्द्रमाः।
तन्मातेयमयं पितेति सुचिरात्सप्रत्यभिज्ञं शनै-
र्यस्योत्सङ्गमगाद्गुहो भवतु वः प्रीत्यै स गौरीश्वरः॥ २॥
गुञ्जेभाजिनमस्य कुम्भकुहरे मुक्ताः कुचाभोचिताः
किं भालज्वलनेन कज्जलमतः कार्यं तवाक्ष्णोः कृते।
संधाने वपुरर्धयोर्भगवतोरित्थं निषेधेऽप्यहेः
कर्तव्ये प्रिययोत्तरानुसरणोद्युक्तो हरः पातु वः॥ ३॥
विहितमजगोशृङ्गाग्राभ्यां धनुर्घटितं तथा
नरकरटिनोर्देहार्धाभ्यां गणं प्रतिगृह्णतः।
द्विविधरचनावाल्लभ्यानां निधेरुचिता विभो-
र्जयति लटभापुंभागाभ्यां शरीरविनिर्मितिः॥ ४॥
नेदं पर्णसमीरणाशनतपोमाहात्म्यमुक्षोरगौ
पश्यैतावत एव संप्रति कृतौ तन्मात्रवृत्ती बहिः।

---

१. सुप्रसिद्धोऽयं [illegible] अधिकं त्वेत-
द्विषये Dr. M. A. STEIN, PH. D, महाशयवरविरचितराजतरङ्गिणी-
भूमिकातोऽवसेयम्.

प्रेम्णैवार्धमिदं चराचरगुरोः प्रासेयमात्मस्तुती-
रित्थं देववधूमुखाच्छ्रुतिसुखाः शृण्वत्यपर्णावतात् ॥ ५ ॥
काप्येतेषु रुचिः कचेषु फणिनां पुंस्कोकिलस्येव ते
गोभिः कण्ठतटस्य हृष्यति पुरो दृक्पद्म चक्षुःश्रुतेः।
संधानेऽभिनवे मिथो भगवतोर्जिह्वा पृथक्स्पर्धिनी
भिन्नार्थी सदृशाक्षरामपि वदन्त्येवं गिरं पातु वः ॥ ६ ॥
दातुं वाञ्छति दक्षिणेऽपि नयने वामः करः कज्जलं
मौर्जगं च भुजेऽङ्गदं घटयितुं वामेऽपि वामेतरः।
इत्थं स्वं स्वमशिक्षितं भगवतोरर्धे वपुः पश्यतोः
साधारस्मितलाञ्छितं दिशतु वो वक्त्रं मनोवाञ्छितम् ॥ ७ ॥
गाढालिङ्गन मङ्गलं भवतु ते स्वस्त्यस्तु वश्चाटवः
किं ब्रूमः प्रियया विलासकलह श्रद्धेय एवासि न।
इत्युक्ते निबिडप्रवासचकितैर्यावद्व्रणैः स्थीयते
संघट्टः शिवयोः स तावदधिकस्पष्टः शिवायास्तु वः ॥ ८ ॥
तदर्धनारीश्वरमूर्धरत्नमर्धं विधोरस्तु समृद्धये वः।
यदद्रिकन्यावदनातिरिक्तद्वितीयभागभ्रमगातनोति ॥ ९ ॥
तद्वीतव्यतिरेकगद्रितनयादेहेन मिश्रीभव-
न्निष्प्रत्यूहमिह व्यपोहतु वपुः स्थाणोरभद्राणि वः।
वेण्या भोगिवधूशरीरकुटिलश्यामत्विषा वेष्टिता
जूटाहेरपि यत्र भाति दयितामूर्त्येव पृक्ता तनुः ॥ १० ॥
प्रौढाः कञ्चुकिनो जरद्वृषवरः कुम्भाम्बुपारश्रुति-
र्नित्याप्तोऽपि बहिष्कृतः परिकरः सोऽयं समस्तोऽप्यहो।
अर्धीचक्रसतीकृताद्भगवता चारित्रचर्याविदा
सा भिपाहुरितं चराचरगुरोरन्तःपुरं पार्वती ॥ ११ ॥
लीलोद्यानवनश्मशानगमने स्वेच्छापराभिन्नयोः
सम्यक्प्रसाम्बरतादिगम्बरदशासनीडनिर्व्रीडयोः।

पर्याप्तातुलरामणीयकमहाश्रीभैरवाकारयोः
क्षेमं वः शिवयोः समासमदशोर्दिश्यादचिन्त्यं वपुः ॥ १२ ॥
चूडेन्दोरिव रोचिषा मुकुलितं वातायनाभं श्रियः
पानार्थं परिषेवितं मधुकराकारैः कुमाराननैः ।
औन्नत्यादधिवास्य वक्रपवनैर्घ्राणोपयोगीकृतं
कस्योरोजसरोजमस्ति न मनस्तोषाय गौरीशयोः ॥ १३ ॥
अर्धे स्निग्धविमुग्धमिद्धहुतभुग्दिग्धं तथार्धे जग-
त्पायादीश्वरयोस्तदक्षि तिलकस्थानस्थितं वीक्ष्य यत् ।
क्रीडाकर्मणि कार्मुकं करतले कर्तुं किरीटेन्दुना
सोत्सेकश्च निरुत्सुकश्च युगपद्देवः स्मरो जायते ॥ १४ ॥
व्याला वायुभुजस्तृणेढि च तृणान्युक्षा बुभुक्षातुरो
निष्कौपीनपटः कुटुम्बभरणो किं स्वस्मि चिन्ताकुलः ।
दौर्गत्यादिति पिण्डमेकमकरोद्गौरीशरूपेण यो
यश्चाभीष्टफलप्रदस्त्रिजगतः कस्मैचिदस्मै नमः ॥ १५ ॥
ज्याघोषैर्बधिरीकरोति ककुभो बाहू मुहुः पश्यति
स्वस्य स्वेन विकत्थते रचयति प्रोच्चैस्तरां तर्जनीम् ।
यस्मिन्केवलमेव केलिरभसाज्जातेऽर्धनारीश्वरे
वीरंमन्यतया स मन्मथभटो वातूलितस्तं स्तुमः ॥ १६ ॥
वपुःखण्डे खण्डः प्रतिवसति शैलेन्द्रदुहितुः
शिखण्डे खण्डेन्दुः स्वयमपि विभुः खण्डपरशुः ।
तथापि प्रत्यग्रं शरणमुपयातं प्रति विभो-
रखण्डो व्यापारो जगति करुणाया विजयते ॥ १७ ॥
प्रेमार्धे वपुषो विलोक्य मिलितं देव्या समं स्वामिनो
मौलौ यस्य निशापतिर्नगसुतावेणीनिशामिश्रितः ।
आस्ते साम्यमनुवर्तनार्थमिव तत्कृत्वा वपुः खण्डितं
देयाद्द्वयभावनां स भगवान्देवोऽर्धनारीश्वरः ॥ १८ ॥

इति महाकविश्रीकल्हणप्रणीतमर्धनारीश्वरस्तोत्रम् ।

## श्रीकवीन्द्रबहादुरश्रीलेङ्घादीक्षितविरचितम्[1]
## आनन्दमन्दिरस्तोत्रम्[2] ।

वृन्दारकावलिकिरीटमणिप्रकाश-
नीराजिताङ्घ्रियुगला कमलायताक्षी ।
शोणाम्बरावृततनुर्निजभव्यभूमिः
श्रीसंकटाद्य विकटावतु संकटान्नः ॥ १ ॥
संदर्शनागतलसल्ललनाजनाली-
पूजासभाजनविभासितभव्यमूर्तिः ।
तत्पादपद्मवसतां विदुषां नतानां
श्रीसंकटा भगवती भविकाय भूयात् ॥ २ ॥
त्वत्पादपद्मविनतस्य न तस्य कस्य
संकष्टसंतपनमस्तमियात्समस्तम् ।
पूर्णेन्दुसुन्दरतराञ्चितचन्द्रिकायां
कां यान्ति हन्त गतिमाशु न वा तमांसि ॥ ३ ॥
देवि त्वदीयपदपङ्कजसेवकानां
का नाम संभवभवोद्भटतापभीः स्यात् ।
किं चात्र चित्रमधिकं सरति स्मृतेऽपि
तापस्तु तद्धृदि यदा नितरां विलग्नम् ॥ ४ ॥
देवि त्वदीयवरकार्यविधानरिक्तः
सिक्तः स किं न सुधया त्वदृशा भवत्या ।
बालेऽपि मय्यविनयेऽपि नवेऽपि मातः
किं ते पुनः समुचिता न दयार्द्रदृष्टिः ॥ ५ ॥
त्वद्भक्तिभावविभवेऽप्यभवं न भव्यः
श्रीभृतभूपभविकाद्भुतभागधेये ।

---

१. अयं श्रीलङ्घादीक्षितः १८५९ वैक्रमे (=१८०२ खिस्ताब्दे) स्तोत्रमिदं रचितवानिति चरमश्लोकतोऽवगम्यते. २. अस्य च स्तोत्रस्यैकमेवैकादशपत्रात्मकं पुस्तकमुपलब्धम्.

बालोऽपि बालधिषणोऽपि च बालिशोऽपि
नो संकटेऽद्य विकटे किमयं दयार्हः ॥ ६ ॥

स्वच्छक्तिरेव कवने मनने मतीनां
क्षीणां घने निधुवनेऽप्यवने वनेऽपि ।
सैवासि मां किल विलोकय दीनदीनं
हीनं प्रियेन्दुसदृशा स्वदृशा चकोरम् ॥ ७ ॥

प्रातर्नटन्नलिनकान्तिनवाननानां
पूजासमाजितलनूततिरङ्गनानाम् ।
शोणाम्बरा सुरपतेर्दिगिव प्रकामं
कामं तनोतु निभृतं मम संकटा सा ॥ ८ ॥

नानावतारचरितैर्भुवि भक्तकार्ये
धुर्ये मुदा कृतवती भवती भवानी ।
मां बालकं निजनवक्षुपया विधाय
मातर्वियोगिनमिदं तव किं नु योग्यम् ॥ ९ ॥

श्रीसंकटे भगवति स्फुटसंकटान्नः
त्वं पाहि पाहि परिपाहि भवानि पाहि ।
वन्द्यैः कवीन्द्रतिलकैः किल कीर्त्यते ते
रात्रिंदिवं यदिह नाम नु संकटघ्नी ॥ १० ॥

बद्धाञ्जलिस्त्वदुपकण्ठमकुण्ठकण्ठ-
मुत्कण्ठितस्तु कथयामि महाप्रमादी ।
बालस्तवैव च वधूश्च जनी तवैव
सङ्गेन ते कथमये हृदयं दयार्द्रम् ॥ ११ ॥

लोकेऽपि चेत्तु तनयस्तनुते प्रमादा-
द्यद्यन्यथा विरहिणं क्षुपया न माता ।
त्वं तत्कथं वितनुषे क्षुपया वियोगं
योगं च मागतिदये कथयाद्य मातः ॥ १२ ॥

ते संकटेऽद्य विकटे निकटे भवानि
बालास्तथैव विलसन्ति तथैव वध्वः ।
ताँल्लालयस्यथ न मां किमहं दृशोस्ते
रम्यः पुरः समभवं न भवन्महागाः ॥ १३ ॥
नित्यास्यथो विभुरसीश्वरभागधेये
चञ्चच्चराचरचरित्रविचित्रभित्तिः ।
तस्मान्ममापि हृदये सदये स्थितासि
मातर्मयीह कुपितासि रयात्क यामि ॥ १४ ॥
दीनान्सदा दितिसुतान्सितदन्ति हन्त
हन्तुं मुदादितिसुताः प्रभवन्ति शक्ताः ।
शुम्भादिकेष्वतिबलेषु विजृम्भितेषु
कोऽन्यो विनात्र भवतीं प्रभवेच्छरण्यः ॥ १५ ॥
भूपेषु भूतिविभवं भवभागधेये
त्वं बिभ्रती भविकमद्भुतमातनोषि ।
दीनेषु हीनसुदृशेषु च मादृशेषु
स्निग्धां सुधांशुसदृशां न दृशं तनोषि ॥ १६ ॥
इन्दिन्दिरप्रचलसुन्दरवृन्दनन्द-
दिन्दीवरालिसदृशा स्वदृशाप्यमन्दम् ।
त्वं मां विलोकय पुरंदरवन्दनीये
कोऽन्यः प्रनन्दयति चन्द्रमृते चकोरम् ॥ १७ ॥
उत्तुङ्गरिङ्गदुरुगाङ्गतरङ्गसङ्ग-
भङ्गीविभासिततनुः सदनङ्गदक्षी ।
काशीविलासवलिता हरतां मदन्तः-
संतापसंततिमियं नितरां समन्तात् ॥ १८ ॥
कान्ताजनार्पितहिरण्यजकुम्भधारा-
साराभिषेकिततनुर्वितनुद्विपः स्त्री ।

कर्पूरपूरसरदर्चिसमर्चिताङ्गी
भङ्गीकरोतु मदभव्यभरं भवानी ॥ १९ ॥
वृन्दारकेन्द्रकरचञ्चलचामराली-
चञ्चचलच्चिकुरचारुचरित्रचित्रा ।
लोकेशकेशवलसच्छयचन्द्रवृन्द-
नीराजिता नगसुता महितां मुदे स्यात् ॥ २० ॥
वृन्दारकालिमुकुटालिमिलन्मसार-
माणिक्यमञ्जुमधुपाञ्चितपादपद्मा ।
पद्मालया करगचामरवीज्यमाना
मानाय मे भवतु सा गिरिजासमाना ॥ २१ ॥
नायाति ते हृदि दया सदयेऽपि मात-
र्यापि मे मनसि तत्कुतुकं चकास्ति ।
आलोक्य रोदनपरं तनयं न कस्याः
स्वान्ते समुल्लसति सान्द्रदया नु मातुः ॥ २२ ॥
मातर्भवानि शुभवाणि भवानि नम्रः
कम्रस्त्वदङ्घ्रिनलिनाञ्चितचञ्चरीकः ।
चञ्चचराचरविचित्रचरित्रचारु-
चूडेव लोकयसि मां न विलोलदृग्भिः ॥ २३ ॥
आलोक्य रोदनपरं तनयं नवं त्वं
का वा भवेच्च जननी जनिताङ्कपालिः ।
दृष्ट्वापि मामपि रुदन्तमनन्तमन्तः-
कान्ताकृपापि न कथं समुदेति मातः ॥ २४ ॥
सिद्धेश्वरि त्रिभुवनेश्वरि सिद्धसंघ-
संपूज्यपादकमले कमलायताक्षि ।
अन्वर्थतां कृतवती भवती भवानी
सर्वेषु ते मयि कुतो व्यभिचारचारः ॥ २५ ॥

अद्धा स्मृतं यदिह सिद्धसुधीन्द्रसंघैः
सिद्धिं दधाति बहुधा बहुधाम धाम ।
गन्धर्वधुर्यविबुधोद्धुरसाधु सिद्धिं
सिद्धेश्वरीपदयुगं ध्रुवमादधातु ॥ २६ ॥
वन्दारुवन्द्यसुरवृन्दकिरीटकोटि-
श्रीमन्मसारमणि मञ्जुमिलन्मिलिन्दम् ।
सान्द्राङ्गुलीचलदलं नगनन्दिनी श्री-
पादारविन्दमिह नन्दयतादमन्दम् ॥ २७ ॥
आनन्दसुन्दर पुरंदर विन्दुवृन्द-
संदेह दोलितसुवर्णनवर्णनीयम् ।
मन्दान्प्रनन्दयतु बालमृणालवाल-
किंजल्कपुञ्जजनिमञ्जुलमञ्जुकुञ्जम् ॥ २८ ॥
शाणावलीढितमनोहरहीरकाभा-
सद्भासुरं गिरिभुवो विभवौघगव्यम् ।
सद्भानुभानुनिकरद्युतिदामवार्म
कामं करोतु निभृतं मम जानुयुग्मम् ॥ २९ ॥
संतापसंततिनिरन्तरतान्तिशान्ति-
कान्तं प्रकामकदलीकुलकोमलं च ।
श्रीकण्ठकेलिकलनाभवनं भवान्या
जङ्घायुगं जरयतु ज्वरमुज्ज्वलं मे ॥ ३० ॥
यस्य प्रकाममहिमानममन्दमान-
मालोक्य काञ्चनगिरिर्जडतामयासीत् ।
शैलावलीन्द्रजनुषो निभृतं नितम्ब-
भारः स मे भवतु भव्यतराय भूयः ॥ ३१ ॥
योऽभून्महामतिमतां सदसद्विकल्प-
कल्पः प्रकामरसनावलनाभिरामः ।

श्रीकण्ठमुष्टिधरणैकविलासशाली,
गव्याय मे भवतु भूधरभूवलमः ॥ ३२ ॥
यस्मिन्सुवर्णविलसद्रवमञ्जुलाग्रे
वेणीसुमेषु जयमन्त्रलिपिर्विभाति ।
गाङ्गेयगौरतरकेतककान्तिकान्तः
कण्ठाद्रिरीन्द्रजनुषोऽवतु पृष्ठभागः ॥ ३३ ॥
अद्धा धराधरधुरंधरधोरणीन्द्र-
सज्जन्मनो निजजनोज्ज्वलभाग्यभाजः ।
रम्भानवोदितदलद्वयसुन्दराभं
पार्श्वद्वयं दलयतान्मम दीर्घदुःखम् ॥ ३४ ॥
अङ्गाङ्गसङ्गिसुषमाच्छतरङ्गिणीज-
रिङ्गत्तरङ्गविभवभ्रमिमावभूता ।
भूताधिपस्य सुदृशो निभृतं गभीर-
नाभीनिभा भवतु मे भविकाय भूयः ॥ ३५ ॥
लावण्यपूर्णजलनाभि•सुवापिकोद्य-
च्छैवालबालशुभमञ्जरिकेव मञ्जुः ।
सत्कञ्जगुञ्जदलिमञ्जुललोचनायाः
लोमावली कलयतात्कुशलं शिवायाः ॥ ३६ ॥
जेतुं शिवं स्तननगेषु तपस्यतो या
निःश्रेणिकेव मदनस्य विभाति हैमी ।
सोपानपङ्क्तिरिव नाभिसरोवरस्य
शैलोद्भवो वलयतात्त्रिवलीविलासम् ॥ ३७ ॥
वीक्ष्य प्रकामसुषमामसमां ययोः श्री-
वक्षोजयोर्हिमगिरीन्द्रजनेर्जनन्याः ।
धूलिं गजा दधति कुम्भयुगेऽतिदीना
ह्रीणा मनागपि तमोहरतां तमान्तौ ॥ ३८ ॥

हेमप्रभौ विमलबालमृणालनाल-
लीलाहरौ सुरुचिरौ गिरिराजजन्याः ।
सत्कान्तिकान्तमणिकङ्कणपृश्निपूर्णौ
पाणी शिरीषमृदुलौ तनुतां मुदं नः ॥ ३९ ॥

श्रीकण्ठकण्ठपटलमकटां कपाली-
शालीनतोद्भमवती गिरिराजपुत्र्याः ।
लीलातता भुजलता तनुतां विलासं
लेखेव काञ्चनभवा निकषोपलस्था ॥ ४० ॥

स्वर्णाभवर्णशुभशङ्खवरेण्यशोभो
लोभोल्लसद्गिरिशबाहुविलासशाली ।
लेखात्रयेण ललितः शिखरीन्द्रपुत्र्याः
कण्ठः स कुण्ठयतु तापमकुण्ठनादः ॥ ४१ ॥

रम्भानवोदितलसद्दलमध्यसुप्त-
व्यालीव मञ्जुलविलासकला शिवायाः ।
सद्यक्षकर्दमविमर्दमनोभिरामा
वेणी सुवर्णसुषमा महिता मुदे स्यात् ॥ ४२ ॥

यत्साम्यमाप्तुमतुलं सुतपस्तपन्ति
सन्मानसे सरसिजानि नतानि तानि ।
ऐन्द्री दिगङ्गणविजृम्भितभानुभानु-
भास्वद्भवानि वदनं सदनं मुदां नः ॥ ४३ ॥

व्योमाङ्गणभ्रमणविभ्रमसंभृताङ्गः
प्राप्यापि पर्वणि शशी स यदीयसाम्यम् ।
पश्यन्यदीयसुषमामसमां क्षिणोति
तत्स्याद्भवानि वदनं सदनं मुदां नः ॥ ४४ ॥

स्वेदाम्बुसंकुलविलोलकपोलपालि
शालिभ्रमद्भ्रमरकालि विभासयल्लगत् ।

तुन्देन्दुबिम्बगतलम्बि भुजंगमञ्जु
तत्स्याद्भवानि वदनं सदनं मुदां नः ॥ ४५ ॥
सत्कर्णभूषणसुवर्णमिलन्मसार-
माणिक्यमञ्जुलमयूखविभाभिरामम् ।
स्वर्णाद्रिकीर्णमनि पृश्निवरेण्यवर्ण
तत्स्याद्भवानि वदनं सदनं मुदां नः ॥ ४६ ॥
नासासु मौक्तिकमयूखसमूहसान्द्रं
निस्तन्द्रचन्द्रकलितं वसुमेरुशृङ्गम् ।
कस्तूरिकाङ्कितमिव स्फुरदिन्दुबिम्बं
तत्स्याद्भवानि वदनं सदनं मुदां नः ॥ ४७ ॥
पञ्चेषु पञ्चविशिखेषु विभावभूता
लीलालसत्तिलसुमाच्छरमाभिरामा ।
मुक्तावलीवलितमञ्जुलमण्डना सा
नासा विनाशयतु तापमगेन्द्रजायाः ॥ ४८ ॥
वैधेयधुर्यधिषणा निगदन्ति साम्यं
सद्बन्धुजीवकुसुमे न हि यस्य तस्य ।
तत्स्यात्सुधारसभरं यदि सोऽपि तुल्यः
कल्याणमाकलयतादधरः शिवायाः ॥ ४९ ॥
सद्विद्रुमद्रुमदलद्रवदामवामा
निस्तन्द्रचन्द्रकरसान्द्ररमाभिरामाः ।
वज्राब्जोज्ज्वलतलाः शशिमौलिकान्ता
दन्तांशवो विदलयन्तु ममाद्य दुःखम् ॥ ५० ॥
विद्यां चतुर्दशतयीं चतुरां चतस्र-
श्चञ्चद्विचित्रनिगमान्रुचिरान्दधाना ।
कल्पद्रुमोदितलसद्दलमञ्जुला सा
लास्यं गिरां कलयताद्रसना शिवायाः ॥ ५१ ॥

भास्वद्विभाकरविभाभरभासुराभं
मीनामुखं समभवद्भवभाग्यभावैः।
आजन्तदाशु तदलोकि भवेन दत्ता-
ङ्गुष्ठं तदङ्घि चिबुकं तनुताच्छिवं नः॥ ५२॥
सत्कर्णभूषणमणिप्रविकीर्णवर्ण-
श्रेणीसुवर्णकिरणालिवरेण्यवर्णा।
श्रीमन्मधूकसुषमा गरिमाभिरामा
कालीकपोलपटली तनुताच्छिवं नः॥ ५३॥
कञ्जस्फुरच्चपलखञ्जनयुग्ममञ्जु
गुञ्जन्मिलिन्दमिलदं रुजमञ्जुलं यत्।
श्रीमन्मसारमणिकान्तिनितान्तकान्तं
काली सदीक्षणयुगं तनुताच्छिवं नः॥ ५४॥
जानीमहे मदनदाहविधौ धनुर्य-
च्चन्द्रस्मशेषमभवत्तदिदं किमत्र।
दुर्गाभ्रुवोर्जनिमुपेत्य जगज्जयाय
जागर्ति तद्भ्रुकुटियुग्ममिदं मुदे स्यात्॥ ५५॥
राहोर्भयादिव धृतार्धतनुः सितांशुः
शीतांशुशेखररमालिकतामयासीत्।
तत्रापि यन्मृगमदच्छलतो विभाति
सोऽङ्कः शिवा सदलिकं तनुताच्छिवं नः॥ ५६॥
सत्कुण्डलप्रचलमण्डलमण्डितांशु-
प्रोद्दण्डखण्डशुभताण्डवमण्डिगण्डौ।
वर्ण्यौ सुवर्णगणकीर्णवरेण्यवर्णौ
कर्णौ गिरीन्द्रजनुषस्तनुतां मुदं नः॥ ५७॥
सिन्दूरपूरपरिपूरितमध्यभागा
श्रीमन्मसारधरणी वसुपद्मरागा।

सद्भानुभानुनिभृता तिमिरच्छटेव
सीमन्तसंततिरगेन्द्रजनेर्मुदे स्यात् ॥ ५८ ॥
नानाच्छरत्ननिकरद्युतिदाम वामं
श्रीहीरकाकिसुपमागरिमाभिरामम् ।
मुक्तावलीवलितमैन्द्रधनुः प्रकामं
कामं गिरीन्द्रजनुषः कुरुतात्किरीटम् ॥ ५९ ॥
षण्मुखवर्णवरवर्णनवर्ण्यमाना
नानाकवीन्द्रकविताकुलवाल्यमाना ।
नन्दन्निलिम्पलळनातिवन्द्यमाना
मानाय मे भवतु शैलसुता समाना ॥ ६० ॥
यस्य प्रभाववशतः कवयामि यामि
यद्यत्करोमि कलयामि भजामि नौमि ।
त्वच्छत्तयनावृतमनाश्चलितुं न शक्तः
शोणं महामहिमशालिमहो नमामि ॥ ६१ ॥
वन्दे सुरासुरकिरीटमणिप्रदीप-
नीराजिताङ्घ्रिकमलां हिमशैलबालाम् ।
लक्ष्मीवचो भगवतीकरकेकिपुच्छ-
स्वच्छोच्छलच्चटुलचामरवीज्यमानाम् ॥ ६२ ॥
कुन्देन्दुसुन्दरमुखी करवृन्दसान्द्र-
निस्तन्द्रचन्द्रचयचन्दनचर्चिताङ्गीम् ।
स्वच्छन्दनन्दनवनीसुममञ्जुमाला-
मन्देन्दिरामिह नुमो नगनन्दिनीं ताम् ॥ ६३ ॥
ये नाम नाम निगदन्ति नगेन्द्रकन्ये
मन्ये भवन्ति भुवनेषु भवानि धन्याः ।
नन्दत्कवीन्द्रकविताकलनैरमन्द-
मानन्दयामि भवतीं न कुतः कृपार्हः ॥ ६४ ॥

शोणाम्बरारुणमणिप्रविकीर्णवर्ण-
श्रेणीवितीर्णकिरणा शरणाशरण्या ।
वीणागुणानणुगणक्कणपाणिपूर्णा-
पर्णा सुवर्णकरणा शरणाय मे स्यात् ॥ ६५ ॥
पीयूषपूरपरिपूरितहैमकुम्भ-
धाराभिषेकसुषमागरिमाभिरामा ।
रामा शिरोमहितमण्डनदीप्तिवामा-
कामारिवामवदनास्तु वितीर्णकामा ॥ ६६ ॥
ऐन्द्री दिगङ्गणविजृम्भितमण्डितांशु-
मार्तण्डमण्डलमयूखरमाभिरामा ।
स्याद्वृद्धिसिद्धिकरचञ्चलचामरौघै-
रान्दोलिता नगसुता महिता मुदे नः ॥ ६७ ॥
वातालिलोललहरीकुलकाल्यमान-
जम्बालजालविलसन्नलिनाच्छनेत्राम् ।
चित्राम्बरां जनविचित्रचरित्रचित्रां
वन्दे पवित्रचरितां गुरुगोत्रपुत्रीम् ॥ ६८ ॥
केकिप्रकामकलकण्ठविकुण्ठकण्ठां
.................................... ।
श्रीहाटकाङ्कघटितां तरलुङ्गतुङ्ग-
शृङ्गस्थितां नगसुतां महितां नमामि ॥ ६९ ॥
बालाकुलाकलितचञ्चलचामराली-
वातोर्मिदोलनचला चलवालबाला ।
लीलाकुलाललितबालमृगाङ्कमौलि-
बालामला कलयताद्विपुलं विलासम् ॥ ७० ॥
भालाङ्कुशाभयवरासिसुशक्तिमुद्रा-
पाशाञ्चकार्मुकमनोरमबाहुमालाम् ।

मालाङ्कितामच्छचरणां शरणान्तराय-
च्छेदान्वितां नगसुतां कलये विशालाम् ॥ ७१ ॥

क्षुभ्यद्विपक्षवरपक्षसुकक्षलक्ष-
सल्लक्षणक्षणविलक्षणदक्षकक्षा ।
पक्षाश्रितस्वजनरक्षणदक्षिणा सा
दाक्षायणी क्षपयतान्मदपक्षपक्षम् ॥ ७२ ॥

झंझंझझंझझझझं कृतिमञ्जुगुञ्ज-
न्मञ्जीरपुञ्जमृदुसिञ्जितमञ्जुलाभिः ।
थंथंथथंथथथथं थथथथ्यमित्थं
सत्तालल्लालनकलाकलनाकुलाभिः ॥ ७३ ॥

तुंतुंतुणुंतुणुतुणूमिति नादवर्ण्य-
वीणागुणानुरणनान्वितसञ्जुजाभिः ।
रम्भादिभी रचितताण्डवमण्डिताच्छो-
द्दण्डाङ्गणासुखगणाय ममास्त्वपर्णा ॥ ७४ ॥

कादम्बिनीचपलमण्डलमण्डितामा-
मैन्द्रीदिगङ्गणमणिद्युमणिप्रभाभाम् ।
तुन्देन्दुसुन्दरकरोत्करभासुराभां
संभावयामि भविकाय शुभां भवानीम् ॥ ७५ ॥

मुक्ताच्छगुच्छविषदच्छविहारतारा-
गौरांशुकांशुनिचयाञ्चितचन्द्रिकारात् ।
सद्वक्रचन्द्रसुषमा शशिमौलिवामा
राकेव सा तिरयतान्मम तीव्रतापम् ॥ ७६ ॥

केशालिशैवलचया सुषमाम्बुपीना
मीनाच्छमञ्जुनयना स्तनचक्रवाका ।
अम्भोजभव्यवदना सरसामला गे
दूरीकरोत्वगसुता सरसी सुतापम् ॥ ७७ ॥

तुङ्गाङ्गभङ्गिनि मतङ्गवरे निषण्णा
  शोणाम्बरा रचितकुङ्कुमपङ्करागा ।
संध्येव नीलजलदोपरि राजमाना
  मानाय मे भवतु शैलसुतासमाना ॥ ७८ ॥
रिङ्गत्तुरङ्गगतिभङ्गितरङ्गिताङ्गी
  पार्श्वस्थितप्रथमचामरवीज्यमाना ।
बन्दीन्द्रवृन्दजयनादनिभाभिरामा
  रामा हरस्य वितनोतु तनोर्मुदं नः ॥ ७९ ॥
श्रीमत्सुवर्णशिबिकोपरि राजमाना
  नाकस्थपाणिचटुचामरवीज्यमाना ।
मासङ्गदुन्दुभिधुधुंकृतिबन्धुरश्रीः
  सश्रीकमाकलयतादिह मां मृडानी ॥ ८० ॥
माद्यन्मृगेन्द्रमहिता स न राजमाने
  रम्यामरीमुकुटसन्मणिनन्द्यमाने ।
नन्दत्कवीन्द्रकविताभरभासमाने
  *श्रीविन्ध्यवासिनि कुरुष्व शिवं समाने* ॥ ८१ ॥
देवि प्रतापतपने तपति त्वदीये
  व्यर्थं व्यधायि रविरेष विदग्धधात्रा ।
मत्वेत्यहो नवनवं प्रतिभासमर्कं
  कुर्वन्ननेन विजिते मनुते शठं स्वम् ॥ ८२ ॥
मातुः सुधांशुधवला तव कीर्तिहंसी
  *याता सरोरुहजनेः सदने समाना ।*
तेनापि मूर्ध्नि विधृता घनमानदानं
  तच्चित्रचित्रमधिकं हृदि भासते नः ॥ ८३ ॥
दैत्येन्द्रवृन्ददलनं निजदक्षरक्षा-
  पक्षाश्रितं किल विलक्षणकान्तिकान्तम् ।

शैलावलीन्द्रजनुषः शरणानुकूलं
शूलं मम क्षपयतात्कलुषद्रुमूलम् ॥ ८४ ॥
कल्पान्तकोपिशिवकायकषायकान्ति-
श्चण्डांशुचण्डकरमण्डलतीक्ष्णधारः ।
कात्यायनीकरकुटीरसरीसृपेन्द्रः
कौक्षेयकः क्षपयतान्मदपक्षलक्षम् ॥ ८५ ॥
शत्रूचमात्रगुरुगोनविचित्रगोत्र-
चित्रासनैकचतुरा रुचिरा च पर्वा ।
शर्वाम्बुजातनयना करसंनिविष्टा
कष्टान्गदा दलयतान्मम संनिकृष्टान् ॥ ८६ ॥
टांकारतारनिनदेन पलायिताभू-
दैत्येन्द्रवृन्दपृतना दलनापि यस्य ।
चण्डांशुचण्डकिरणोत्कटकाण्डखण्डं
कोदण्डमाक्षपयतादघमण्डलं मे ॥ ८७ ॥
श्रीमत्सुवर्णघटितोद्भटसौधमुग्ध-
वातायनागतमरुच्चयलोलचोलाम् ।
तुङ्गामरैर्मृदुमृदङ्गनिनादभङ्गि-
नीराजितां नगसुतां महितां नमामि ॥ ८८ ॥
पीयूषपूरपरिपूरितसच्चडाग-
कल्लोललोलकमलोल्लसितामुदाराम् ।
हारावलीवृततनुं शुभशारदेन्दु-
गौरां परां सुरुचिरां प्रणमामि ताराम् ॥ ८९ ॥
सौवर्णसौधवलभीगृहराजमानां
नानामरीविधृतचामरवीज्यमानाम् ।
कर्पूरपूरपरिपूरितपात्रवर्ति-
नीराजितां नगसुतां महितां नमामि ॥ ९० ॥

स्वर्णाद्रिरम्यशिखरोपरिसंस्थितां तां
नम्रामरीमुकुटसन्मणिकान्तिकान्ताम्।
मन्दारदामकलितां ललितां नितान्तं
कान्तां शिवस्य मुदितां महितां नमामि ॥ ९१ ॥
कल्पद्रुमोल्लसितमूलविराजमाना
तत्स्यन्दमानमकरन्दकदम्बसान्द्रा।
निर्मत्य रागचयपिञ्जरिताङ्गभङ्गी
भङ्गीकरोतु कलुषं नगनन्दिनी सा ॥ ९२ ॥
कैलासशैलशिखरोपरिशातकुम्भ-
सिंहासनस्थितिमतीं चलचामरालीम्।
लोकेशकेशवशिवप्रणुतामशेष-
लोकालिमूललतिकां प्रकृतिं नमामि ॥ ९३ ॥
यन्मायया वृतमिदं भुवनं विभाति
न स्पन्दितुं किमपि नावृतमेव शक्तम्।
लोकेशकेशवशिवाः प्रभवः स्फुरन्ति
यन्माययैव किल तां प्रणमामि मायाम् ॥ ९४ ॥
विश्वं स विष्णुरखिलं जनयत्यमन्द-
मानन्दयत्यखिलमम्बुजभूः स मोदात्।
अन्ते हरः स किल संहरतेऽखिलं त-
द्यन्माययापरिमितां प्रकृतिं नुमस्ताम् ॥ ९५ ॥
सर्वं चराचरमिदं भुवनं विभुर्या
व्याप्य स्थितासि ललिता महितामिता त्वम्।
वाचामगोचरतमा विषयः कथं स्या-
स्तान्मे गिरां चपलतां जननि क्षमस्व ॥ ९६ ॥
या मायया जगदिदं प्रकृतिर्विशेष-
मुत्पाद्य पालयति संक्षिपति प्रकामम्।
सा मे कथं नु वचसामिह गोचरा स्या-
न्मातः क्षमस्व चपलत्वमिदं शिशोर्मे ॥ ९७ ॥

ब्रह्माण्डखण्डभवनानि लसन्ति यस्यां
तोयेषु बुद्बुदकुलानिव चञ्चलानि ।
सा मे कथं नु वचसां विषयः परा स्या-
त्तन्मे क्षमस्व गदितं तनयस्य मातः ॥ ९८ ॥
यज्जृम्भते यदिह भाति विभाति रामं
तत्तत्परीतमिह भाति तवैव शक्त्या ।
तस्मान्मृडानि रचिता वचनैस्त्वदीयै-
र्मातस्तव स्तुतिरियं कृपया गृहाण ॥ ९९ ॥
अद्धा व्यधायि बहुधा विगताधिबाधा
राधा त्वया कुतुकिता न च धारणा मे ।
किं ते कुतूहलमभूत्प्रकटादकोप-
शुम्भादिदम्भदलने सुररक्षणे च ॥ १०० ॥
आनन्दमन्दिरमिदं स्तवनं मृडान्या
मोदात्कृतं किल कवीन्द्रबहादुरेण ।
भक्त्या पठेत्प्रतिदिनं सुकृती मुदा यः
सायुज्यमद्रिजनुषः शुभमाप्नुयात्सः ॥ १०१ ॥
आनन्दमन्दिरमिदं स्तवनं भवान्याः
स्वानन्दतोऽरचि कवीन्द्रबहादुरेण ।
लल्लाख्यदीक्षितवरेण सुधीश्वरेण
बान्धोकरेण चतुरेण मनोहरेण ॥ १०२ ॥
अङ्कपञ्चाष्टचन्द्रेऽब्दे मास्याषाढे कुजे तथा ।
षष्ठीदिने शुक्लपक्षे कवीन्द्रेण कृता नुतिः ॥ १०३ ॥

इति श्रीचिरंतनमोर्धणीकरोपनामकियत्कालाकलितबान्धोकरोपनामकाशीस्थ-
महाराष्ट्रभारद्वाजगोत्रपण्डितेन्द्रकवीन्द्रश्रीमच्छ्रीशंकरदीक्षितपौत्रपवित्र-
विचित्रचरित्रचिनितश्रीमच्छ्रीलक्ष्मणदीक्षितपुत्रश्रीरवीन्द्रबहादुर-
लल्लादीक्षितविरचितमानन्दमन्दिरस्तवनं
संपूर्णतामगमत् ।

---

## श्रीमद्रामभद्रदीक्षितविरचितो
## विश्वगर्भस्तवः[1] ।

(जानकीजानिस्तोत्रमित्यपरनामकः ।)

वेधोविष्णुमहेशवासवमरुद्वह्न्यर्कचन्द्रादयो
यस्याज्ञां परिपालयन्ति शिरसा देवा नमोवाकिनः ।
सत्यानन्दचिदुज्ज्वलप्रकृतये सर्वाधिपत्यस्पृशे
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ १ ॥
यं सर्वाण्यनुभान्ति भान्तमखिलं यद्भाभिरुद्भासते
जाग्रत्स्वप्नसुषुप्तिषु स्फुरति यः साक्षी चिदात्मा परः ।
यं ज्ञात्वा व्यसनं तरन्ति जगदित्यास्ते यदज्ञानत-
स्तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ २ ॥
दृष्टे यत्र परावरे च हृदयग्रन्थिः स्वयं भिद्यते
छिद्यन्ते चिरवासनापरिणताः सर्वे पुनः संशयाः ।
क्षीयन्ते खलु तत्क्षणं तनुभृतः सर्वाणि कर्माणि वा
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ३ ॥
येनालम्ब्य चतुर्मुखीं नवजपापुष्पारुणां राजसीं
मूर्तिं कामपि सृज्यते महदहंकारादिचित्रं जगत् ।
तिर्यग्देवमनुष्यनाकनरकक्ष्मावार्धिमेघादिभि-
स्तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ४ ॥
तार्क्ष्येण प्रणतः फणीन्द्रशयनः श्रीभूमिनीडान्वितो
वैकुण्ठे निवसन्नवाम्बुदरुचिर्यः शुद्धसत्त्वात्मकः ।
शङ्खं चक्रमसिं गदामपि वहन्विश्वत्रयं त्रायते
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ५ ॥

---

१. 'पुस्तकचतुष्काधारेण लिखितोऽयमथ विश्वगर्भस्तवः. तत्र पुस्तकत्रयमस्मन्मातुलस्य महाराजपुरामहारवास्तव्यस्य श्रीमतो नागस्वाम्यार्यस्य ग्रन्थलिप्या तालपत्रे लिखितम्. तुरीयं तु कवेर्वासभूमेः तिरुवाङ्कुराख्यस्थलादस्मत्तातपादैः संपादितं प्रेषितं च। तच्च तालपत्रलिखितं ग्रन्थाक्षरैः' इति श्रीकुप्पुस्वामी शास्त्री तञ्जौरनिवासी.

संवर्तव्यतिषङ्गभङ्गुररूपां चण्डाट्टहासस्फुर-
द्धिष्ण्डां निटिलाक्षिपावकशिखानिर्दग्धविश्वत्रयाम् ।
शूलोल्लासिकरां पुरा वहति यः शुभ्रां तनुं तामसीं
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ६ ॥
शक्राय ज्वलनाय धर्मपतये रक्षोधिपायाम्भसा-
मीशाय श्वसनाय शर्वसखये रुद्राय धात्रे दिवे ।
अर्यम्णे शशिने हराय हरये त्वष्ट्रे परब्रह्मणे
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ७ ॥
सूर्याचन्द्रमसोर्महीन्दुसुतयोर्देवासुराचार्ययो-
श्छायानन्दनसिंहिकातनययोर्मूर्त्या च केत्वात्मना ।
मेषादिष्ववतीर्य राशिषु नृणां प्राप्याणि यः प्रापये-
त्तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ८ ॥
सालग्रामशिलासु चण्डकिरणे हृत्पुण्डरीके नृणा-
माविर्भूय यथोचितं दिशति यः स्वेष्टं फलं भावितः ।
सत्तामात्रतया स्थितोऽपि सकलेष्वर्थेष्वमेयाकृति-
स्तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ९ ॥
गाढोन्नद्धजटाय पङ्कजदृशे कालाम्बुवाहत्विषे
सव्यासव्यकरात्तचापविशिखायांसस्फुरत्तूणये ।
भ्रात्रा च प्रियया च संभवदलंकाराय पार्श्वद्वये
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ १० ॥
नोपासे कमलासनं न कलये नव्येन्दुचूडामणिं
नालोके नमुचिद्विषं न गणये देवानथान्यानपि ।
मौलौ केवलमार्यदेशिकपदाम्भोजद्वयं भावयं-
स्तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ११ ॥
नामान्यष्टशतं च यस्य भगवानाचष्ट पत्न्यै शिवो
धाता यच्चरितं मृकण्डुतनयाद्द्यापि शृण्वन्स्थितः ।

आ बालादवकर्ण्यते भुवि कृता वाल्मीकिना यत्कथा
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ १२ ॥
मन्त्राम्रेडनमेव न प्रथमतो यन्त्रार्चने का कथा
शङ्केवास्ति न दैवतैक्यमनने चर्या ममैतादृशी ।
किं कुर्यामलसः परंतु करुणामव्याजमातन्वते
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ १३ ॥
नाधीतं विधिवन्न वा गुरुकुलावासादि चीर्णं व्रतं
श्रौतस्मार्तविधिष्वनाचरणमाचारो निषिद्धेष्वपि ।
धर्मापेतधनेन जीवनमिति प्राप्तान्यघान्युज्झितुं
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ १४ ॥
संमूर्च्छत्कफरुद्धमार्गविलुठत्प्राणाभिघातत्रुट-
न्नाडीविश्लथसंधिबन्धसुदृढारब्धाखिलाङ्गव्यथैः ।
द्रक्ष्यन्ते यमकिंकरा नृभिरिति श्रुत्वा तदप्राप्तये
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ १५ ॥
शक्तः किं भिषगेष भेषजमिदं सिद्धं चेत्किमेषा रुजा
किं वार्येत पुरेव किन्त्वहमपि स्यामित्युदारस्पृहः ।
अप्राप्यैव मनोरथं निपतति प्राणीति निर्वेदत-
स्तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ १६ ॥
सायं प्रातरहर्निशेति समये गच्छत्यनालोचिते
प्रत्यासीदति जीवितावधिदिने काले कटाक्षोन्मुखे ।
किं धैर्यं क कुतूहलं तनुभृतामित्यन्तरालोचयं-
स्तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ १७ ॥
नेक्षन्ते गतिमायुषः स्वमुदरं पुष्णन्ति जाल्माः परं
लोके पाणिपदं प्रसार्य रदनानुद्घाट्य गुञ्जन्त्यसून् ।
कस्तेषां पशुभिर्विशेष इति मा भूवं तथेति स्वयं
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ १८ ॥

आसन्ने पतने तनोः क दयिता क भ्रातरः कात्मजाः
क स्निग्धाः क महीपतिः क गुरवस्तापं तदापोहितुम् ।
तावद्योऽवतरन्हृदि क्षपयितुं शक्नोति सर्वां शुचं
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ १९ ॥

कत्यत्रामृपत क्षितौ कति मरिष्यन्ति म्रियन्ते कती-
त्यालोच्यैवमिवात्मनोऽपि वपुषः पाते शुचं भाविनीम् ।
उद्वेगेन गरीयसा तरलितः स्वामिन्दयस्वेत्यहं
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ २० ॥

कत्यार्याः कति पण्डिताः कति महीपालाः कति श्रोत्रियाः
कल्याचारजुषः क्षितौ कवलिताः कालेन घोरात्मना ।
संप्रत्येष गतः क विस्मरति किं भीतोऽस्मि तस्मादत-
स्तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ २१ ॥

भो गृह्णीत विनह्यत प्रहरत क्लिश्नीत मा मुञ्चत
द्वेधा दारयतेति घोरवचनैर्भ्रूभङ्गभीमाननैः ।
मा भूवं यमकिंकरैः कृतभयो देहान्त इत्याशया
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ २२ ॥

पन्थाः शर्करिलः प्रतप्तसिकतस्तीक्ष्णोन्मिषत्कण्टको
विद्युत्सूचिनिभास्यदंशमशकः कुप्यद्दशत्कुकुरः ।
यस्यास्तां नगरीं यमस्य मनुजैर्गम्यां निशम्याकुल-
स्तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ २३ ॥

नान्नं नाम्बु न वाहनं न वसु न च्छाया न शीतानिलो
यस्मिन्नास्ति घनातपोष्णसिकतोदन्याशनाध्याकुले ।
तं प्रेतेशपुरीपथं प्रविशतां भावयमलध्वं नृणां
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ २४ ॥

याता येन जडाः प्रसन्नमतयो लुब्धा वदान्या मता
राजानः पिशुनाः परोपकृतयो मूकास्तथा वाग्मिनः ।

गन्तव्यं नियमेन तं यमपुरीमार्गं स्मरन्साध्वसा-
त्तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ २५ ॥
यत्रास्ते मलमूत्रपूयरुधिरमाया विगाढुं नदी
पर्यङ्कः शयितुं हुताशनमयस्तप्तायसस्त्रीसखः ।
कस्तामिच्छतु चेतसापि नगरीं याम्यामतस्तद्भिया
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ २६ ॥
नीतानां नरकं नृणां यमभटैर्भीमैर्गृहीत्वा दृढं
हा किं पापमकारि हा न विषहे हा प्रन्ति हा का गतिः ।
इत्याक्रन्दितघोरमन्तकपुरं मे मास्तु पाहीत्यहं
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ २७ ॥
दृष्टेष्वन्तककिंकरेषु दलति त्रासेन हृन्मर्मणि
प्राणे निष्क्रमणोन्मुखे कथयिता को मे तदानीं दशाम् ।
विज्ञाय स्वयमेव तावदभयं देहीति याचत्वहं
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ २८ ॥
यावन्मे न स दुर्दशाविमनसः कर्णान्तमाकामति
क्रूरः कालकरालकासरगलव्यालोलघण्टाध्वनिः ।
तावत्तूर्णमुपेत्य पाहि कृपयेत्यद्यैव विज्ञापयं-
स्तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ २९ ॥
मूर्धानं मुसलैस्तुदन्ति नयने विध्यन्ति सूचीशतैः
सिञ्चन्ति द्रुतसीसकं श्रवणयोश्छिन्दन्ति खड्गैस्तनुम् ।
मर्त्यानां यमकिंकरा इति भियः का वा कथा मे यत-
स्तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ३० ॥
आशाधीशजिदाशरेन्द्रजयिनं रामं श्रितानां पुरो
धूमोर्णारमणस्य[1] किं भटगणो धूनोतु गुर्वीर्गदाः ।
तेन स्यामहमाश्रितो रघुपतिं लोकेशमित्युल्लिखं-
स्तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ३१ ॥

१. धूमोर्णारमणस्य यमस्य. यमस्य स्त्री धूमोर्णा.

कुर्वेऽहं सकृदेव च प्रपदनं याचे तवासीति च
श्रीमानद्य घटेत दातुमभयं मे सर्वभूतादिति ।
पर्यालोच्य कथंचिदप्यनुगुणीकृत्यातिलोलं मन-
स्तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ३२ ॥
पर्याकृष्य परस्त्रियाः परधनादप्यन्तरङ्गं चलं
पारुष्याद्विनिवृत्य वाचमनृतादन्यापवादादपि ।
ध्यातुं स्तोतुमलं भवन्ति कतिचिद्भ्रमावहं केवलं
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ३३ ॥
यावच्चित्तमघाद्विकृष्य सुकृते यत्नेन निक्षिप्यते
तावत्तिष्ठदिवाल धावति पुनस्तस्मिन्गते केवलम् ।
एवं दुर्वशमेव संमति वशीकर्तुं प्रयस्यन्निदं
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ३४ ॥
आत्मा श्रेयसि वर्तितोऽपि विषयानेवानुयाति द्रुतं
यत्कीशश्चतुरन्तयाननिहितोऽप्यारोहति क्ष्मारुहान् ।
निग्राह्यं यदनुग्रहेण तमिमं शंसन्ति सन्तोऽधुना
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ३५ ॥
सुप्तं जागरितं स्थितं प्रचलितं भुक्तं तथोपोषितं
किं वक्ष्यामि यदात्मने हितमिहामुत्रापि तत्र स्मृतम् ।
हा हा किं करवाणि सांप्रतमिति त्यक्त्वा शुचं नन्दितुं
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ३६ ॥
आजन्माहमिदं दिनावधि गता सा सा दशा स्वप्नव-
त्पश्यामो यदि तत्र तत्र मनसा श्रेयो न किंचित्कृतम् ।
किं वा भावि तथाविधस्य भवतु त्वत्क्रितो वा परं
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ३७ ॥
श्रोतुं घ्रातुमवेक्षितुं रसयितुं स्प्रष्टुं च कौतूहला-
दर्थेष्विन्द्रियपञ्चकं तत इतो मामेकमाकर्षति ।

दीनो दीनदयालवे तदधुना पाहीत्युदस्यन्भुजौ
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ३८ ॥

कस्मादस्तु वशे मनो यदरिभिः कामादिभिः कृष्यते
जीयन्ते कथमिन्द्रियाणि विषयानन्दप्रवृत्तानि मे ।
प्राच्या वासनया यथैवमभयत्तामेव मङ्क्षु बला-
त्तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ३९ ॥

कामेन भ्रमति क्षुधा विलपते लोभेन संक्षिप्यते
मोहेनान्ध्यमुपैति माद्यति मदेनैपत्यकाण्डे परान् ।
मात्सर्येण च मामकं हृदयमित्यस्यैव संशुद्धये
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ४० ॥

धम्मिल्लः शिखिबर्हभाररुचिरः पूर्णेन्दुकान्तं मुखं
वृत्तोत्तुङ्गघनौ स्तनौ कृशतरो मध्यो नितम्बः पृथुः ।
इत्यासक्तमिदं वधूषु हृदयं मा भूदिति प्रार्थयं-
स्तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ४१ ॥

के भृत्याः क इवात्मजाः प्रणयिनी का नाम के भ्रातरः
कौ मातापितरौ च के च गुरवः क्रुद्धस्य पुंसः पुरः ।
तत्क्रोधो न भवेद्यथा मम तथा कार्या दयेति ब्रुवं-
स्तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ४२ ॥

अग्राह्यं वसु गृह्यते प्रभुरसंसेव्यश्च संसेव्यते
प्राणाश्चेदपि यान्ति यान्त्वतिथये नान्नं पुनर्दीयते ।
कुक्षिः स्वोऽपि न पुष्यते यदुदयाल्लोभं तमेवोज्झितुं
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ४३ ॥

भार्येत्यामिषभक्षिकां सुत इति प्राक्स्वाधमर्णागतं
पिण्डं मांसमयं स्वपूर्वसुकृतध्वंसं तथार्था इति ।
विद्यायेन न चात्मतत्त्वमथ तं मोहं जिहासन्नहं
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ४४ ॥

आचारेण च विद्यया च विभवैश्वान्नप्रदानेन च
स्फीतैर्बन्धुजनैश्च किंच यशसा को मेऽस्ति भूमौ समः ।
इत्याकस्मिकमुज्झितुं निखिलमप्युत्सेकमभ्युत्सुक-
स्तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ४५ ॥
दातारं कृपणोऽयमित्यकुटिलं जिह्मोऽयमित्युन्नतं
नीचोऽसाविति सर्वशास्त्रकुशलं प्रज्ञाजडोऽसाविति ।
इत्थं यो मुखरीकरोति मनुजांस्तं मत्सरं प्रोज्झितुं
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ४६ ॥
एतत्कृत्यमिदं त्वकृत्यमिति मे तावान्विवेकः कुतः
कामक्रोधविमोहलोभमदमात्सर्योपरुद्धे हृदि ।
तेनाघानि समाचरन्नपि गतिं प्राप्तुं समीचीमहं
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ४७ ॥
दिक्पालेषु दिवस्पतिप्रभृतिषु स्वाकारभेदेषु यो
भूत्वा दण्डधरो ददाति जगतां स्वस्वानुरूपं फलम् ।
पापं नाशय मेऽथवा दिश दिवं पापात्मनोऽपीत्यहं
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ४८ ॥
उद्यानोपवनाटवीह्रदसरोवापीतडागापगा-
कूपाराचलनीवृदम्बुदतडिन्नक्षत्रताराग्रहैः ।
आकीर्णं कृमिकीटपक्षिपशुभिः पश्यन्मृषेदं जग-
त्तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ४९ ॥
मातुर्गर्भमुपस्थितो निपततो जातस्य सर्वेष्वपि
व्यापारेष्वपटोर्वयस्युपचिते तत्तत्प्रियाकाङ्क्षिणः ।
रुग्णस्यान्तगतस्य या व्यसनिता मर्त्यस्य तामुज्झितुं
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ५० ॥
विण्मूत्राग्निपरस्थभाजि जठरे मातुर्यदालोचितं
जातो दैवतपूजया जनिमृतिक्लेशं विजह्यामिति ।

१. रुग्णस्य व्यधितस्येत्यर्थः.

हा तद्विस्मृतवानपि प्रहितधीः पुण्येन केनाप्यहं
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ५१ ॥
स्थूलोऽहं प्रथमं कृशोऽहमधुनेत्येवं शरीरे भव-
न्नात्मप्रत्यय एव शास्त्रविवृते भेदेऽपि देहात्मनोः ।
मामुन्मुञ्चति नेति संप्रति तमुन्मुञ्चेयमित्युत्सुक-
स्तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ५२ ॥
न स्थूलो न कृशस्तथा न पुरुषो न स्त्री न षण्ढस्तथा
नो बालो न युवा न चापि दशमीत्यात्मा यथा ज्ञायते ।
कर्तव्या करुणा तथा रघुवरेत्यभ्यर्थनायन्त्रित-
स्तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ५३ ॥
चेतः कर्म करोति गर्हितमसौ कर्तृत्वमेतद्गतं
निक्षिप्यात्मनि मानवो जडमतिर्भुङ्क्ते कृतं तत्फलम् ।
भोक्तृत्वानुदयाय नाहमधुना कर्तेति बोद्धुं तत-
स्तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ५४ ॥
वश्यो जाङ्गलिकस्य वानर इव स्वात्मापि यस्य स्थितः
कस्तं शास्ति स तिष्ठतु व्रजतु वा निद्रातु जागर्तु वा ।
मां दुर्निग्रहमानसं शुभपथेऽवस्थाप्य शाधीत्यहं
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ५५ ॥
पूर्वे यत्र जना ययुः क्षितितले निक्षिप्य देहान्निजां-
स्तद्गन्तव्यमवश्यमन्तकपुरं स्वेनेति धीरस्ति चेत् ।
कः कर्म प्रतिषिद्धमाचरतु सा नास्तीति तल्लिप्सया
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ५६ ॥
कैर्यं कार्यमिह त्वया पितृपते साहाय्यगार्ये प्रभो
मा भूवन्मम शोधनाय विधिभिः क्लेशा भटानां तव ।

१. दशमी ग्रहः. २. जाग्रदिको निर्वचनः. ३. इह पार्थे प्राणलिप्सकरणे साहाय्यकार्यमित्यर्थः.

आत्मानं परिवापयेयमिति यत्सर्वेश्वरायाधुना
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ५७ ॥

सप्ताष्टैः कवलैः सुपूरमुदरं प्रादेशमात्रं वह-
न्विप्वग्भ्राम्यति विश्वगर्भ इव यो वित्तार्जनाकाङ्क्षया ।
सोऽहं संप्रति देशिकस्य कृपया मोहं त्यजन्मुक्तये
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ५८ ॥

नद्यामस्ति विशुद्धमम्बु विपिने नानादलान्यासते
सन्त्यङ्गी च करौ च किं न सुकरो देवस्य पूजाविधिः ।
प्राप्या तेन भवाब्धितीर्णिरलसस्तन्नाप्यहं श्रेयसे
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ५९ ॥

एकं नालमिदं किमुन्नतपदप्राप्त्यै मम प्रायशो
यज्जातोऽस्मि सतां कुले रघुपतौ भक्त्या विशुद्धात्मनाम् ।
दुग्धस्योपरि शर्करामिव फलं प्राप्तुं ततोऽप्युत्तमं
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ६० ॥

देहोऽयं पतितेति बान्धवजनोऽप्याक्रन्दितेति क्रिया
सा सोर्ध्वं चलितेति वर्षशतमप्यैतापरस्तादिति ।
नाहं वेद्मि न किं तु नित्यवदिदं जानन्निवापि स्थित-
स्तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ६१ ॥

काका मेचकिता बका धवलिताः पारावता धूमिताः
कीराः श्यामलिताः पयो मधुरितं निम्बद्रवस्तिक्तितः ।
तिन्तिण्याः फलमम्लितं च भुवने येनाखिलेशात्मने
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ६२ ॥

फणीन्द्रोणरणप्ररूढयशसः पार्थस्य कृष्णे गते
तन्नारीजनतस्करैः परिभवो येनाधिको लम्भितः ।

---

१. 'पतिता' इत्यादि भविष्यति द्रष्ट. ३. 'व्याक्रन्दिता' इति च पाठभेदो दृश्यते.
२. 'ऐता' इति आर्षरूपं इण् गतौ धातुः. ४. 'नाहं वेद न' इति पुस्तकान्तरे.

यन्मित्रावरजौ निशाचरपतेर्भ्रातुः स्वसुश्च श्रवो-
नासच्छेदकृतौ दिगीशजयिनो नाथं श्रितांस्तं नरान् ।
नेक्षन्ते यमकिंकरा इति विदंस्तस्याश्रयाकाङ्क्षया
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ७० ॥

यत्पातादशुचिर्महीति जनने स्नात्वा निधायानलं
नीत्वा वत्समितः पुनन्ति मनुजा मेध्यं कथं तद्वपुः ।
कुर्वंस्तस्य परिग्रहो मम पुनर्मा भूदिति प्रार्थनां
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ७१ ॥

यावन्तोपगतेषु जन्मसु पुरा देहाश्च्युतास्तावतां
बुद्ध्या संकलने तु वेद्मि कुणपच्छन्नां समस्तां महीम् ।
एवं भावितनूग्रहणजं क्लेशं जिहासन्नहं
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ७२ ॥

संयोज्यास्थिचयं जुगुप्सितमिमं बद्ध्वा सिराभिर्मिथो
लिप्तास्रक्पिशितैस्त्वचा पिदधता धात्रा शरीरं कृतम् ।
एतस्मिन्नतिकुत्सिते चिरमहंकारं स्थितं प्रोज्झितुं
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ७३ ॥

अन्तस्थं वपुषो यदस्ति पिहितं तन्न त्वचा चेन्मुहु-
र्दण्डेन श्वसृगालकङ्कबलिभुक्सङ्घं नरो वारयेत् ।
इत्याधाय मतिं वपुष्यहमिति ज्ञानं लुनीहीत्यहं
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ७४ ॥

बाल्यं तद्गतमेव यत्र मनसो मौग्ध्यं तथा यापितं
तारुण्यं च वृथा न यत्र विषया भुक्ता न चीर्णं तपः ।
प्राप्तं वार्धकमक्रियार्हमधुना कुर्यां किमन्यत्पुन-
स्तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ७५ ॥

---

१. 'लिप्तास्रक्पिशितैः' इति पुस्तकान्तरे. 'लिप्ता शीर्देहलयः' इति च तत्र पुस्तके लिखितम्. पुस्तकद्वये 'लिप्तास्र–' इति वर्तते. अर्थश्च पूर्ववत्. मूलेऽपि तु 'लिप्तास्रक्पिशितैः' इति.

मौलिस्त्वत्प्रणतिं करोतु शृणुतां कर्णौ त्वदीयां कथां
वाणी स्तौतु भवद्गुणान्करयुगं त्वामर्चतु प्रत्यहम् ।
पादौ त्वां च भवत्प्रदक्षिणगती कुर्वन्निति प्रार्थनां
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ७६ ॥

पापान्निन्द्यधनप्रतिग्रहकृतादन्यस्वचौर्योत्थिता-
द्विप्राद्याहतिसंभवात्परवधूगात्राभिमर्शोद्भवात् ।
अन्यत्संभवि यच्च तच्च करयोर्मोक्षाभिलाषादत-
स्तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ७७ ॥

केशाः काशनिभाः सिराविषमितं गात्रं गतिर्विक्लवा
चक्षुःश्रोत्रमपाटवं युवतयो नेच्छन्ति चण्डामिव ।
अस्त्वेवं विषयस्पृहा तु न गलत्यद्धेति तद्धानये
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ७८ ॥

बाधिर्येऽपि यया नरः पटुनटीगानानि शुश्रूषते
सत्यान्ध्येऽपि दिदृक्षते मृगदृशां तारुण्यलक्ष्मीमपि ।
शान्तावर्पितधीरहं क्षपयितुं तां तामसीं वासनां
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ७९ ॥

दारापत्यसनाभिगोधनगृहग्रामोपवन्यापगा-
कूपाराचलमेघचन्द्रदिनकृत्तारादि दृश्यं जगत् ।
न द्रष्टुं क्षणमुज्झितां तनुमिति ज्ञात्वा भयान्मृत्युत-
स्तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ८० ॥

आरूढं चतुरन्तयानमवनीपालार्पितं किं ततो
भृत्याः सन्ति च किं ततो बहु तथा लब्धं धनं किं ततः ।
मर्त्यत्वे सति मानवस्य तदहं मृत्योर्भयान्निर्भरा-
यास्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ८१ ॥

---

१. तथा च भागवते—'वाणी गुणानुकथने श्रवण कथायां हस्तौ च कर्मसु मनस्तव पादयोर्नः । स्मृत्यां शिरस्तव निवासजगत्प्रणामे दृष्टिः सतां दर्शनेऽस्तु भवत्तनूनाम् ॥' इति.

अस्त्यन्नं शुभमस्ति शीतजलमप्यस्ति प्रदाता जनः
शक्या च क्षुदुदन्यया सह निराकर्तुं शरीरे स्थिते ।
त्यक्तेऽप्यत्र तयोः शमाय सुकृते धीः स्यान्ममेतीच्छया
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ८२ ॥

तैलाभ्यङ्गशुभान्नभोजनदुकूलाच्छादनामोदव-
द्गन्धालेपनपुष्पधारणतरुण्यालिङ्गनाद्यैः सुखैः ।
राजाप्युज्झति पोषितं वपुरिति ज्ञात्वा तनूमस्थिरां
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ८३ ॥

घर्मेणोद्भटमारुतेन पयसो वृष्ट्या हिमेनर्तुषु
क्लिश्यन्तेऽह्नि बुभुक्षया निशि तथा स्वापेन कामेन च ।
मर्त्याः खल्विति मर्त्यता मम पुनर्मा भूदितीच्छलहं
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ८४ ॥

कोऽहं प्राग्जननात्तनूपतनतः पश्चाद्भवेयं कथं
कः प्राप्नोतु दिवं च्यवेत नरके को वेति चिन्तां विना ।
आयुक्तः सततं निजोदरभृतावप्यात्मनः श्रेयसे
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ८५ ॥

शास्त्राण्यप्यधिगत्य मत्सरभृतः कुत्सां मिथः कुर्वते
वाञ्छन्तोऽन्यवधूर्वसन्ति विषयव्यावृत्तचित्ता इव ।
इत्थं चेत्सुधियोऽपि का मम कथा तद्दुर्गुणग्लानये
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ८६ ॥

शुश्रूषा न पितुर्न मातुरपि नो गोब्राह्मणेष्वादरो
नाचार्ये न गुरौ न च स्थविरके विस्रम्भलेशोऽपि वा ।
येषां तेऽपि नरास्तरन्ति निरयं यत्र प्रपत्तिं गता-
स्तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ८७ ॥

स्वं गर्भं दधती न या सुरमगान्मासान्दशापि प्रभु-
र्यो स्तन्यार्पणदुग्धपायनधुर्सैर्यैरपार्मीखिरम् ।

यत्तस्मै हितमेतदप्यकृतमित्यस्य क्षयायांहस-
स्तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ८८ ॥
सस्नेहं सदयं समस्कुरुत मां यो जातकर्मादिभि-
र्व्यापारैः पितुरस्य किं कृतमभूत्पथ्यं परत्रोचितम् ।
एतेनापि यदस्ति पातकमिदं दूरीचिकीर्षन्नहं
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ८९ ॥
इष्टं वार्य वितीर्य घासकवलानिष्टानदत्त्वा दृढं
रज्ज्वाबद्ध्य शिरोधरां च निखिलं दुग्ध्वा पयश्शूयताम् ।
यो दोषोऽस्ति गवां नृणां स न भवेदस्माकमित्युत्सुक-
स्तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ९० ॥
यान्सर्वा अपि देवता इति जगत्याह श्रुतिः सूरयो
येषामङ्घ्रिरजोभिरङ्घ्रिसलिलान्याहुः पवित्राणि च ।
भक्तिस्तेषु मम द्विजेषु भवतादित्याशिषा प्रेषित-
स्तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ९१ ॥
यस्याचार्यकमस्ति यस्य गरिमा विद्याविशेषग्रहे
साक्षादीश्वर एष इत्यविशयात्सोपासितव्यः स किम् ।
प्राप्तव्योऽप्यनुपासितव्य इति च प्रैत्युद्गमं काङ्क्षया
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ९२ ॥
प्रत्युत्थानमथाभिवादनमुभे यत्रागते निर्यतां
प्राणानां पुनरागमाय विदितं यूनां न यत्कोटिभिः ।
एको यत्तदवैति वृद्धमनिशं तं विश्वसानीत्यहं
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ९३ ॥
येद्रयावर्तिनि च स्वभर्तरि शुभाचाराहमस्मीति त-
द्भार्या वेधि यथा तथेन्द्रियगणेऽप्यर्थाञ्जिपिद्धान्गते ।

---

१. आशिषा इत्यादेरर्थः; अद्भिरजोभिः इत्यर्थः. २. 'इत्याशिषा' इत्येव पुस्तकत्रयेऽपि, 'इत्यशिषा' इत्येतत्पुस्तके. ३. प्रत्युद्गम प्रतिनन्दनम्

बुद्धिं स्व विमलं न वेत्तु मम किं त्वेनां पुनीहीत्यह
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ९४ ॥
मत्त्वा साधुरसाविति स्त्रियमपि ज्ञात्वा तदीया सतीं
स्त्रीपुंसानपि तद्गृहे सुचरितान्निश्चित्य धूर्तानपि ।
भुक्त्वान्नान्यपि डाम्भिकस्य भवने प्राप्तान्यघान्युज्झितुं
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ९५ ॥
वापीकूपतडागकर्मणि तथैवारोपणे भूरुहा-
मैन्धो-गो-वसु वाससा वितरणे यज्ञकतूना विधौ ।
मर्त्याना हृदय प्रवर्तयति यत्पादाब्जसंसेवनं
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ९६ ॥
प्राज्ञादप्यधिको जड सुकृतिनोऽप्युत्कर्षवान्पातकी
पुत्रोऽर्हञ्जनकादपि स्तुतिपदं बालश्च वृद्धादपि ।
येनार्थेन स यत्पदाम्बुजसकृद्ध्यानेन लभ्या नृणा
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ९७ ॥
मल्लीदामसुगन्धिचारुचिकुरा मायचकोरीदृशः
पीनोत्तुङ्गपयोधरा पिकवधूसुस्निग्धकर्णस्वरा. ।
हेमाङ्ग्य. स्मरगर्विता युवतयो लभ्या यमभ्यर्चता
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ९८ ॥
यत्रानन्दमयं यदाप्य न पुनर्मर्त्य समावर्तते
यत्र ब्रह्ममहेन्द्रचन्द्रशकलोत्तसा निनसाभृत. ।
तद्विष्णोः परमं पदं नियतया लभ्येत यस्यार्चया
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ९९ ॥
अप्राज्ञेष्वपि पण्डिता इति पुरो य. श्लाघया भ्राम्यतो
यास्मिन्विद्वदविद्वदन्तरमतिर्नास्त्येव दातु· प्रभो. ।
प्रज्ञानामतिदु सह कलिमह त जेतुमेवाञ्जसा
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ १०० ॥

१ अन्ध शब्द सवरातोऽप्रवाची

आपन्नासनमास्यमध्वरविधेरेषामनर्हं कुलं
येषामर्हमभूच्च तुल्यमुभये ते यद्गृहीतैर्द्विजैः ।
याज्यन्ते किमिमं ब्रुवे कलिमतस्तस्य प्रहारेच्छया
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ १०१ ॥

किं त्वं मे नियतां ददासि न भृतिं यः सम्यगध्याप्यसे
निर्णीतां भृतिमर्पये न भवते नाध्यापयस्येव यः ।
इत्थं यो गुरुशिष्ययोः कलहकृज्जेतुं कर्तुं तं कलिं
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ १०२ ॥

ऊढा नाऽलमिति प्रजासु जनितास्वप्युद्वहन्तीतरां
नालं सेति च गूढमन्यगृहिणीं गृह्णन्ति भोक्तुं नराः ।
इत्युद्दीपयतः कलेः स्मरमपि प्राप्तुं जुगुप्सामहं
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ १०३ ॥

दौष्ट्यं साधुषु साधुतामपि तथा दुष्टेषु मूढेष्वपि
प्राज्ञत्वं बत मूढतामपि पुनः प्राज्ञेषु यः शंसति ।
राज्ञोऽग्रे पिशुनः कलौ स नरकी मा भूवमित्युत्सुक-
स्तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ १०४ ॥

संमुह्यन्मनसो मम प्रतिदिनं संभाविताना पुनः
पापानामपनोदनाय सुवचे यस्यैव नाम्नि स्थिते ।
भीतिः का परलोकतस्त्वनुभृतां पीडाकरात्पापिनां
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ १०५ ॥

रामेत्युच्चरितव्यमक्षरयुगं तथापि भक्त्या सकृ-
त्प्राप्या तेन विमुक्तिरेव यदि तज्जानास्यपि ग्लायसि ।
किं वक्ष्ये सुखमास्य देवि रसने स्निग्धौ मम स्तः करौ
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ १०६ ॥

---

१. 'प्रजा तु जनपुत्रयोः' इति वैजयन्ती. २. 'स्निग्धौ' इत्यत्र 'बद्धाविति वा' इति पुस्तकद्वयेऽपि दृश्यते.

सन्तः पातकतूलचण्डपवनं शंसन्ति यत्कीर्तनं
यत्काश्यामुपदिश्य विश्वपतिना मुक्तिर्नृणां दीयते ।
यच्च श्रीशसहस्रनामसदृशं यन्नाम तन्निश्चितं
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ १०७ ॥

सत्यानन्दचिदात्मवस्तुनि रमन्तेऽस्मिन्यतो योगिन-
स्तस्माद्राम इतीदमेव हि परं ब्रह्माभिधत्ते पदम् ।
इत्येवं विवृणोति यौगिकतया यन्नाम विद्वज्जन-
स्तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ १०८ ॥

अध्यारुह्य कवित्वचूतविटपं वाल्मीकिपुंस्कोकिलो
जल्पन्नाम यदीयमद्भुतसुधामाधुर्यधुर्याक्षरम् ।
शृण्वन्तं जनमाशु संघटयति श्रेयः‌समृद्धिस्त्रिया
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ १०९ ॥

यस्त्वप्यन्तविचारणैकसुलभो यः सर्वलोकेश्वरो
यस्मिन्नायतते स राक्षसपतिक्षुभ्यज्जगद्रक्षणम् ।
यश्चास्मत्कुलदेवता निरुपमा यस्यैव दीने दया
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ११० ॥

कस्माच्चित्प्रथमोपकारमुदितात्कल्याणशीलान्मुने-
र्व्यत्ययासोच्चरिते निशम्य गुणयन्पुण्ये यदाख्याक्षरे ।
कृत्स्नेऽघेऽपि गतेऽजनि द्विजकुले कश्चित्किरातः पुरा
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ १११ ॥

नित्या न कलवः कृता न नितरामर्थास्तथोपार्जिता
भुक्ता न प्रमदा यथोचितरसं का नाम मोक्षे स्पृहा ।
इत्थं जन्म निरर्थकं परिणमन्नेतुं कथंचित्फलं
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ११२ ॥

---

१. श्रेयः समृद्धिरेव स्त्री युवतिः तया इत्यर्थः. २. तथा च भर्तृहरिः—'नारीपीनपयोधरोरुयुगली स्वप्नेऽपि नालिङ्गिता स्वर्गद्वारकपाटपाटनपटुर्धर्मोऽपि नोपार्जितः' इति.

कौमारे विहृतं वृथा न किमपि ज्ञातं मदाद्यौवने
दौर्बल्यैकपदे किमस्ति सुकरं प्राप्ते पुनर्वार्धके ।
आयुश्च स्रवति क्रमादिति विदन्दैवादहं सांप्रतं
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ११३ ॥

पूर्वेद्युर्यमपश्यमद्य तु न तं पश्यामि यद्भूतले
कालस्यैष न किं कठोरमनसः क्रूरो विहारक्रमः ।
इत्थं हन्त विनश्वरेषु मनुजेष्वन्यत्करिष्यामि किं
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ११४ ॥

कायो भ्रश्यति कस्यचित्तु तमनुक्रन्दन्त्यहो बान्धवा-
स्तेषामप्यहह क्षणैः कतिपयैर्भ्रश्यन्ति काया न किम् ।
काले खेलति कः स्थिरोऽस्तु भुवने दिष्ट्याहमेतद्विदं-
स्तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ११५ ॥

यां पश्यन्त्यतिसुन्दरीमनशने तामेव शोच्याकृतिं
भूतेन ग्रसने दुरीक्षवपुषं रोगे जुगुप्साकृतिम् ।
भीमाङ्गीं मरणे नरा इति विदन्दारैषणां निन्दितां
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ११६ ॥

कस्या धर्मपरा मतिर्भवतु का साध्वीं प्रसूतां प्रजां
तस्या वा तनुरस्तु लक्षणवती काले कलौ दारुणे ।
तद्दारेषु वृथा परिग्रहरुचिर्यत्तत्फलप्राप्तये
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ११७ ॥

पुत्रश्चेज्जनितः स जीवति न वा जीवन्स कामो न वा
कामो वंशकरो न वा स इति यन्मज्जन्ति चिन्तार्णवे ।
मर्त्या यत्तनयैषणा तत इयं व्यर्थेति मत्वास्तये
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ११८ ॥

विध्युक्तेन पथा कथापि न नृणां वित्तार्जनसाधुना
यद्विमा अपि धर्ममार्गविमुखा नैवाचरन्त्याश्रमान् ।

राजानश्च धनेप्सवोऽस्तविषयस्त्यक्तुं तदर्थैषणां
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ ११९ ॥

राजद्वारि निविश्य राजपुरुषानाश्रित्य रात्रिंदिवं
शास्त्रेषु प्रकटय्य पाटवमपि प्राप्ते धनेऽप्यंहसा ।
दायादैरुपभुज्यते तदपि न स्वंहो विरक्तुं तत-
स्तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ १२० ॥

कृच्छ्राच्चेद्धनमर्जितं जनयति ज्ञातिष्वसूयां परां
दृष्टिं राजसु दण्डने वधकरं चोरेषु चौर्योद्यमम् ।
गुर्वीमार्जितवस्तु भीतिमसुखां हातुं तदर्थस्पृहां
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ १२१ ॥

स्वामिन्राम जगत्पते निरुपमलय्यन्तवेद्य प्रभो
त्वत्प्रीतिं कुरुतामयं विरचितो मे विश्वगर्भस्तवः ।
एतेन स्तुवतां नृणामभिमतं देहीति याचन्नहं
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये ॥ १२२ ॥

तस्मै प्राञ्जलिरस्मि सर्वजगतां नाथाय पाथोनिधि-
त्वङ्गत्तुङ्गतरङ्गभङ्गुरशरोदन्याय धन्यात्मने ।
पौलस्त्यश्रुतिमण्डलीलटहताण्टाकघण्टाकन-
त्कोदण्डाटनये विनम्रमुनये श्रीजानकीजानये ॥ १२३ ॥

दिष्ट्या लब्ध्वापि कल्पद्रुममपचिनुते तस्य पत्राणि भोक्तुं
लब्धायाः कामधेनोरपहरति सकृच्छुक्भूमार्जनाय ।
संप्राप्तं हन्त चिन्तामणिमपि खनति व्रीहिविध्वंसहेतो-
र्मूढोऽयं याचते यः किमपि फलमिह प्रीतमीशं रघूणाम् ॥ १२४॥

हुंकुर्वद्भिरुदञ्चितभ्रुकुटिभिर्मृत्योर्भटैस्तर्जितं
देवेन प्रहितस्य दाशरथिना मां त्रातुमाधावतः ।
आरोहेदपि किं मम श्रुतिपथं प्राणप्रयाणक्षणे
दिक्कोणेषु विसृत्वरो हनुमतो लाङ्गूलघण्टारवः ॥ १२५ ॥

इति विश्वगर्भस्तवः समाप्तः ।

१ 'ज्ञातुं तदर्थस्पृहाम्' इति पुस्तकत्रये वर्तते; 'दातुं तदर्थस्पृहाम्' इति चतुर्थे पुस्तके

# इन्दुदूतम्[1] ।

स्वस्ति श्रीणां भवनमवनीकान्तपङ्क्तिप्रणम्यं
प्रौढप्रीत्या परमपुरुषं पार्श्वनाथं प्रणम्य ।
श्रीपूज्यानां गुरुगुणवतामिन्दुदूतं प्रभूतो-
दन्तं लेखं लिखति विनयो लेखलेखानतानाम् ॥ १ ॥
यत्र व्योमव्यतिगशिखरेष्वर्हतां मन्दिरेषु
मूर्तीर्जैनीर्नयनसुभगाश्चन्द्रशालानिविष्टाः ।
दर्शं दर्शं विनयविनतोऽघो विमानावतार-
क्लेशं नासादयति निकरो ह्यविद्याधराणाम् ॥ २ ॥
यत्रोत्सर्पच्छिकरकिरणैः शोभयन्प्रदेशं
साक्षाल्लक्ष्मीवसतिरनिशं राजते राजलोकः ।
मेर्वारूढत्रिदशनगरस्पर्धयेवाधिरूढं
शैलाग्रण्यं कनकनिकषस्निग्धभं पञ्चकूटम् ॥ ३ ॥
यत्रेभ्यानां भवनततयः काश्चिदद्रेस्तटाग्रं
प्राप्ताः काश्चित्पुनरनुपदं सन्ति तासामधस्तात् ।
काश्चिद्भूमावपि भृशवलत्केतवः कान्तिदृप्ता
निर्जेतुं द्यामिव रुचिमदात्प्रस्थिता निर्व्यवस्थम् ॥ ४ ॥
यत्र क्रीडोपवनपदवीक्रीडतां नागराणां
विष्वक्तूर्यत्रिकपरिचयप्रीतिमाविष्करोति ।
नृत्यत्केकिप्रकरसुभगा मञ्जुगुञ्जद्विरेफा
वातोद्धूतद्रुमदलततिध्वानवादिप्रह्वा ॥ ५ ॥
श्यामं यस्मिन्नुपल्लरचितं दन्तिनं मत्तरूपं
पुंरूपाभ्यामुपरि कलितं वीक्ष्य शङ्केऽद्रिशृङ्गे ।
उत्तीर्यैतत्पुरमनुपमं स्वर्गलोकादिहेन्द्रो-
ऽद्राक्षील्लोकैरिति विरचितं चिह्नमेतच्चकास्ति ॥ ६ ॥

---

१. एतद्ग्रन्थकर्तुर्नाम ग्रन्थदर्शनेन तु स्फुटं नोपलभ्यते. पुस्तकमप्यस्मत्पार्श्वमेकं प्रायोऽशुद्धमुपलब्धम्

रथाङ्गुः शुण्डायुध इव मदात्कुण्डलीकृत्य दन्तौ
कृत्वोत्तानावुपलरचितो यत्र हस्त्यद्रिशृङ्गे ।
स्वर्गं जेतुं नभसि रभसादारुरुक्षोरमुष्य
दृङ्गस्येव स्फुटयति महाधीरनासीरभावम् ॥ ७ ॥
तस्मिन्योधाभिधपुरवरे श्रीमदाचार्यपादा-
देशान्मासांश्चतुर उषितो यो विनीतो विनेयः ।
साधुः सैष प्रहरविगमे भाद्रराकारजन्या
मात्रीशैलोपरि परिगतं शीतरश्मिं ददर्श ॥ ८ ॥
दृष्ट्वा चैनं स पुरमगुरुध्यानसंधानलीन-
स्वान्तःकान्तं तमिति रजनेः स्वागतं व्याजहार ।
सद्यः साक्षाद्गुरुपदयुगं नन्तुमुत्कण्ठितोऽपि
द्रागेतेन स्थितिपरवशो वन्दनां प्रापयिष्यन् ॥ ९ ॥
दिष्ट्या दृष्टः सुहृदुडुपतेऽस्माभिरद्यातिथिस्त्वं
पीयूषौघैर्भृशमुपचरन्प्राणिनामीक्षणानि ।
पुण्यैः प्राच्यैः फलितमतुलैरस्मदीयैरुपेया-
न्नापुण्यानां नयनविषयं यत्प्रियः सर्वगाणः ॥ १० ॥
देहे गेहे कुशलमतुलं वर्तते कच्चिदिन्दो
नीरोगाङ्गी सुभग गृहिणी रोहिणी तेऽस्त्यभीष्टा ।
अन्याः सर्वा अपि सकुशला दक्षजाः सन्ति पत्न्यः
पद्मार्चिः शं कलयति हृदानन्दनो नन्दनस्ते ॥ ११ ॥
यद्वार्यं ते स्फुटमनुचितो वार्तवार्तानुयोग-
स्त्वय्यायत्तां जगति सकले जानतो मे सुखासिम् ।
मन्तव्योऽयं तदपि सरसः स्नेहमाराधितत्वा-
त्स्वादीयः स्यात्कदशनमपि स्नेहधारोपसिक्तम् ॥ १२ ॥
काष्ठे शीतोपगतमतनु प्राक्तनार्धे विदेह-
क्षेत्रे कार्यं चरमभरतक्षेत्रयाम्यार्धभागः ।

---

१. 'दृङ्गं पुरंम्' इति हेमचन्द्रः

मार्गोऽतीतः कथमयमियान्कोमलैः स्वच्छपादैः
प्रौढप्रौढैः शिखरिशिखरैर्दन्तुरीभूतदेशः ॥ १३ ॥
मार्गश्रान्तः क्षणमिह सुखं तिष्ठ विश्रामहेतो-
रुत्तुङ्गेऽस्मिञ्शिखरिशिखरे दत्तपादावलम्बः ।
हृद्यः पद्माभिधवरसरः संभवस्त्वां समीरः
सर्पन्नुच्चैः सुखयतु सखे केतकीगन्धबन्धुः ॥ १४ ॥
नत्वा सीमंधरजिनपतिं प्राप्तपुण्यप्रकर्षो
भूयो नन्तुं त्रिभुवनगुरुं बाहुदेवं सहर्षः ।
मार्गे तीर्थप्रणतिविगलत्पापपङ्कः स्वमौला-
वर्हच्चैत्याञ्चित इति जगद्वन्द्य वन्दामहे त्वाम् ॥ १५ ॥
खिन्नां तीव्रातपपरिचयाच्चोयदस्तोयवृष्ट्या
सिञ्चन्यद्वत्सुखयति कृषिं शोषकालोपपन्नः ।
प्रीतिं तद्वत्प्रियसख मम प्रापिता चित्तवृत्तिं
····तोत्पत्तौ रहसि भवता गच्छता बन्धुना द्राक् ॥ १६ ॥
शान्तिं नीते श्रम इति ततश्चेतसि स्वास्थ्यमाप्ते
दत्त्वा कर्णाववहितमनाः श्रोष्यसि प्रार्थनां मे ।
न श्रान्तानां सुखयति कथा स्निग्धवर्गोदितापि
स्वस्थे चित्ते प्रणयमधुरा बुद्धयो बुद्धवन्ति ॥ १७ ॥
श्रुत्वा याच्ञां मम हिमरुचे न प्रमादो विधेयो
नो वावज्ञाप्यधिकविभवोन्मत्तचित्तेन कार्या ।
प्रेमालापैश्चतुर(?)वयितानिर्मितैर्विस्मृतिं न
प्राप्या प्रायः प्रथितयशसः प्रार्थनाभङ्गभीताः ॥ १८ ॥
भ्रातस्तातस्तव गुणनिधिः पश्य रत्नाकरोऽसौ
वर्षे वर्षे नवजलधरप्रार्पितैरम्बुपूरैः ।
विश्वं विश्वं तरुणतपनोद्दामतापाभितप्तं
मेक्तसेकं मुम्वयति सदाभीष्टविश्वोपकारः ॥ १९ ॥

कि नु ब्रूमस्तव जनयितुस्तस्य दानप्रियत्वं
यो देवानां सततममृतैः कल्पयामास वृत्तिम् ।
अश्वं चोच्चैःश्रवसमसमं नागमैरावतं च
दत्वेन्द्रस्य त्रिभुवनपतेः पूरयामास वाञ्छाम् ॥ २० ॥
कन्यां दत्वा जगति विदितां यौतके कौतुकी च
योऽदान्मोदाद्युगपदमलं कौस्तुभं पाञ्चजन्यम् ।
एवं विश्वंभरमतितमां प्रीणयामास लोभा-
द्यन्नाद्यापि श्वशुरवसतिं संत्यजत्युत्तमोऽपि ॥ २१ ॥
जीयासुस्ते जगति विदिता भ्रातरः पञ्च पञ्च-
न्माहात्म्यास्ते वितरणभटाः पारिजातद्रुमाद्याः ।
द्राक्संकल्पोपनतसकलाभीप्सिता अप्यभीष्टं
याचन्ते यान्विनयविनता नाकिनो वासवाद्याः ॥ २२ ॥
मूर्खं प्राज्ञीयति च कृतनुं कामरूपीयति द्रा-
ग्दीनं शूरीयति च कुटिलं प्राञ्जलीयत्यवश्यम् ।
क्रूरं शान्तीयति गतकलं सत्कलीयत्यजस्रं
लोके सोऽयं जयति निखिलस्त्वद्रगिन्यः प्रभावः ॥ २३ ॥
याते श्यामा सुभग दयिता वर्धयत्युमलक्ष्मीं
पक्षे पर्णे तुलयसि यया विप्रयुक्तस्त्वमिन्दो ।
सापि श्रान्तं भुवनमखिलं स्वस्वकर्मश्रमेण
निद्रादानात्सुखयति सदाभीष्टविश्वोपकारा ॥ २४ ॥
पीयूषार्द्रैस्त्वमपि किरणैर्जङ्गमस्थावराख्यं
भूतग्रामं सुखयसि सुतं संस्पृशन्द्राक्पितेव ।
क्रूरैः शूरप्रकटितकरैर्निर्भरं क्लिष्टलोका-
न्विप्लानिर्वापयसि वसुधां सत्यमेवासि राजा ॥ २५ ॥
एवं विश्वोपकृतिकुशलः कः कुटुम्बे न तेऽस्मि-
प्रायः सद्भिः प्रथितचरितैस्त्वादृशैर्वर्णनीये ।

यद्वा रत्नाकर इति यशः प्राप युष्माभिरेवा-
म्भोधिर्वस्तुर्भवति महिमोदारसत्त्वैस्तनूजैः ॥ २६ ॥
तस्माद्बन्धो जलधितनय प्रार्थनां मे समर्थं
व्यर्थीकर्तुं न खलु कथमप्यर्हसि प्रौढवंश्य ।
येनोत्कृष्टं जगति विदितं याचमानस्य जन्तो-
र्याच्ञाभङ्गे भवति लघुता नैव सा किं त्वमुष्य ॥ २७ ॥
नाशक्यं ते भुवनवलये मित्र पश्यामि किंचि-
त्तेजःपुञ्जैरनतिजरठैरक्रमाक्रान्तविश्व ।
पादान्मूर्ध्नि त्रिपुरजयिनः कौतुकेनोपधाया-
द्याय स्वैरीकृततततजगद्व्यापि शौर्यप्रतापः ॥ २८ ॥
कामं क्षामाकृतिमपि जगद्यज्जयन्तं न कोऽपि
छेत्तुं शक्तस्तदिह भवतो मातुलस्यानुभावात् ।
गोपालोऽपि त्रिभुवनमिदं क्रान्तवान्यत्रिपद्या
तत्राप्येतत्प्रभवति तव श्यालकस्यैव तेजः ॥ २९ ॥
या चाञ्चल्याद्भुवि विजयते विद्युतो नीचसङ्गा-
त्सिन्धूरन्धंकरणगुणतो श्यामलां धूमलेखाम् ।
सापि भ्रातुर्भवति भवतो माननीयानुभावा-
द्विश्वे दोषान्गणयति जनो को हि राज्ञो भगिन्याः ॥ ३० ॥
गन्तव्यस्ते तपनतनयातीरकोटीरमिन्दो
सूर्यद्रङ्गो गुरुपदयुगस्पर्शसंप्राप्तरङ्गः ।
गत्वा तत्र त्रिभुवनजनध्येयपादारविन्दो
द्रष्टव्यः श्रीतपगणपतिर्भाग्यसंभारलभ्यः ॥ ३१ ॥
मार्गे तस्य प्रचुरकदलीकाननैः कान्तदेशं
स्थाने स्थाने जलधिदयितासंततिध्वस्तखेदम् ।
आकर्ण्यान्त.करणविपये(?) स्वापयोक्तं मयेन्दो-
ऽभीष्टं स्थानं व्रजति हि जनः प्राञ्जलेनाध्वना द्राक् ॥ ३२ ॥

शैलादस्मादुपसर पथा दाक्षिणात्येन बन्धो
गन्धोद्रेकोल्लसितकुसुमस्तम्भितेन्दिन्दिरेषु ।
स्थाने स्थाने सरससरसः काननेष्वंशुपूरै-
र्मोदं संपादय कुमुदिनीफुल्लपुष्पेक्षणानाम् ॥ ३३ ॥
तुङ्गे तिष्ठ क्षणमुडुपते त्वं सुवर्णाचलस्य
क्रीडावापी सवनसरसैर्मारुतैः शान्ततापः ।
तत्रत्यानां सकलदिवसक्षुद्व्यथापीडितानां
सौहित्यं त्वत्किरणकवलैः स्ताचकोराङ्गनानाम् ॥ ३४ ॥
तस्मिन्शैलेऽन्तिमजिनवरा वामवामेयदेव-
प्रासादौ यौ तरुणकिरणैः संगरं निर्मिमाते ।
मध्यस्थः सन्सुघटितरुची तौ कुरु प्रायशो य-
त्तोत्तुङ्गानां भवति महतैवापनेयो विरोधः ॥ ३५ ॥
तत्र क्रीडोपवनसरसीस्वच्छनीरान्तरेषु
स्नात्वा स्वैरं प्रतिकृतिमिषान्नव्यधौतांशुकः सन् ।
ज्योत्स्नाजालैः स्नपय मधुरैर्वीरवामेयदेवौ
कर्पूराद्यैस्तदनु च करैरर्जयाभ्यर्च्य पुण्यम् ॥ ३६ ॥
तस्याधस्तान्नगरमपरः स्वर्ग एवास्ति यस्य
प्रौढेभ्यानां भवननिकरैर्ध्वस्तमाना विमाना ।
काम्येकान्ते कृतवसतयः सज्जलज्जाभिभूता
भूमीपीठावतरणविधौ पङ्गुतामाश्रयन्ति ॥ ३७ ॥
यत्रत्यास्तु ग्लपितनयना हन्तनित्यलावण्याः
दूयन्ते नेत्किरणनिकरैर्निर्भरं विप्रयुक्ताः ।
विप्रो (?) यदभिस्वतिरतिरतां योषितां च स्वदीये-
र्ज्योत्स्नाजालैस्तिमिरनिकरैर्दूरनिर्वासिते स्यात् ॥ ३८ ॥
न प्रस्थेयं तदपि भवता वीक्ष्य दक्षेक्षणीयं
द्रङ्गं शृङ्गारितकुवलयं निम्नसंपूर्णमेनम् ।

विष्वग्दत्त्वा नयनयुगलं सम्यगालोकनीयं
पश्चात्तापस्तुदति हृदयं दर्शनीये ह्यदृष्टे ॥ ३९ ॥
तस्माज्जालंधरपुरवरादुत्पतञ्शीघ्रगामी
श्रीरोहिण्याः परिसरमथ प्राप्स्यसि त्वं निमेषात्।
स्थित्वा तत्र क्षणमियमपि प्रेक्षणीया समन्ता-
त्त्वान्तःशल्यं स भवति सतां सार्थको यो विलम्बः ॥ ४० ॥
तस्यां चैकं सुखमुडुपते धार्मिकाणां महीयो
यच्चैत्यानां शुचिरुचिमतामस्ति पङ्क्तिव्यवस्था।
तन्मध्यस्थे न भवति पथि प्रस्थितानां प्रयासो
दूरादेव प्रणतशिरसां देवदेवप्रणामे ॥ ४१ ॥
तेनैवाथ त्वमपि विचरिष्यत्यवश्यं पथेन्दो
श्रद्धाशाली स्फुटमुभयतश्चैत्यमालाञ्चितेन।
नामं नामं जिनभगवतामाकृतीश्चैत्यसंस्थाः
पश्यन्नेकान्तरमवहितः सुष्ठु सव्यापसव्यम् ॥ ४२ ॥
एकं चैतद्वचनममलं मामकीनं न चित्ता-
दुत्तार्यं स्वीकृतनिजसुहृत्कार्यसिद्धे निदानम्।
पण्यस्त्रीणामिह हि नगरे संनिवेशो गरीया-
नास्ते तस्माद्द्रुतिमतिहराद्दूरमेवाभिगच्छेः ॥ ४३ ॥
काचिन्नाग्याः श्रयति समतां भोगिलोकोपगूढा
दृग्नी कानित्फलयति फलं तत्र किंपाकवल्ल्याः।
काचिद्वृत्तीं तुलयति सुवंशहेतुः पणस्त्री
काचिद्वान्ध्यप्रथननिपुणा याति वात्यासखीत्वम् ॥ ४४ ॥
काचित्तीक्ष्णैर्नयनविशिखैर्मर्म यूनां भिनत्ति
नर्मालापैर्हरति हृदयं काचिदाकूतहृद्यैः।
काचित्सांगिलितविकसितैर्मोदयत्यल्पबुद्धी-
न्धैर्यं काचित्स्फुटकुचतटोद्घाटनैर्लुण्टति द्राक् ॥ ४५ ॥

तस्मादासां युवजनपृषद्वागुराणामवश्यं
दूरात्त्यागो भवति हि नृणां श्रेयसेऽमुत्र चात्र ।
तत्राप्यङ्गीकृतनिजसुहृद्व्याहृतेस्त्वादृशस्य
व्यासङ्गो नोचित इति हितं द्विस्त्रिरेतद्वदामि ॥ ४६ ॥
तस्याः पुर्या भवति पुरतो नातिदूरेऽम्बुदाद्रि-
र्द्रष्टव्योऽसौ तरुपरिवृतोदग्रमर्भ्रंकषाग्रः ।
नादैर्गीतैरिव जनमनांस्याहरन्कीचकानां
गन्धर्वाणामिव नवमरुच्चालनाद्घूर्णमानैः ॥ ४७ ॥
शृङ्गेऽमुष्योन्नतिभृति सरस्तीरभूमिप्ररूढा-
न्दूर्वाङ्कुरान्किल कवलयिष्यत्यसौ ते कुरङ्गः ।
भूयः कालक्षुदुदयकृशश्चारणीयोऽयमिन्दो
सामश्रम्भोगरतृणततेर्दुर्लभाखेटतोऽस्य ॥ ४८ ॥
कूजद्भिर्ये श्रुतिसुखकरा कोकिलैर्मल्लिकाना-
मामोदैश्च प्रसृमरतरैः प्राणिनो मोदयन्ति ।
उद्गच्छद्भिर्नवनवतृणैर्वय(?)वैडूर्यबद्ध-
क्षोणीपीठा इव विदधते शं निकुञ्जा द्रुमाणाम् ॥ ४९ ॥
तेपूर्मी स भवदभितः सर्वधूम्रस्तुतैस्तै-
र्वीणानादैरपहृतमना दूरकृष्टो मृगस्ते ।
मा भूत्खेदस्तदनु च तदन्वेषणे वा विलम्बो
गन्तुं त्यक्त्वाश्रितमणुमपि त्वादृशा नोरसहन्ते ॥ ५० ॥
तस्मात्स्वस्मान्नयनविषयान्नायमत्यन्तदूरं
गन्तुं सद्यो नवघनतृणास्वादविक्षिप्तचेताः ।
यन्निर्मग्ना अपि करिवरा अर्बुदाद्रेः कुडङ्गे-
ष्वप्रमाणाः स्युर्बहलविटपिष्वन्यजन्तोः कथा का ॥ ५१ ॥
(त्रिभिर्विशेषकम्)
यद्यप्येतद्गनवनगतं नान्धकारं करास्ते
हन्युर्मो भूसदपि हि भवान्स्वे मृदुत्वे विषण्णः ।

येपूष्णांशोरपि·······कराः कुण्ठतामाश्रयन्ते-
ऽनङ्गक्रीडासदसि दिविषत्पुंश्चलीनां दिवापि ॥ ५२ ॥
तत्र श्रीमान्विमलवसतौ भाति नाभेयदेव-
सेवायातत्रिदशनिकरः पूर्णपादोपकण्ठः ।
नेमिस्वामी दिशति च शिवान्यानतानां निविष्टः
साक्षादिन्द्रालय इव वरे वस्तुपालस्य चैत्ये ॥ ५३ ॥
रूप्यस्वच्छोपलदलमयौ चित्रदोत्कीर्णचित्रौ
चञ्चच्चन्द्रोदयचयचितौ कल्पितानीलशिल्पौ ।
जीयास्तां तौ विमलनृपतेर्वस्तुपालस्य चोच्चौ
प्रासादौ तौ स्थिरतरयशोरूपदेहाविव द्वौ ॥ ५४ ॥
एषा भूमिर्विमलविभुना ब्राह्मणेभ्यो गृहीता
चैत्यं कर्तुं रिपुसुरजिता रूप्यमास्तीर्य विष्वक् ।
ऐतिह्यानि त्वमिति जरतां कुर्वतां मित्रगोष्ठीं
तत्र श्रोष्यस्यनुसृतभवचन्द्रिकाणां मुखेभ्यः ॥ ५५ ॥
द्रष्टव्यः स्यादयमपि सखे भीमसाधोर्विहार-
स्तार्तीयीकत्रिदशसदनस्फातिगर्वापहर्त्रीः ।
एवं चैतत्त्रिभुवनमतिक्रम्य शोभाविशेषैः
प्रासादानामिह समुदितं प्रीतिगोष्ठे त्रिकं किम् ॥ ५६ ॥
आस्ते चैत्यं खरतरकृतं नातिदूरे यदेषां
तत्रोत्तुङ्गध्वजपटपु दिशात्यर्हतो वन्दमानः ।
साक्षाद्दृष्टं समवसरणं यद्विदेहावनीषु
तत्संस्कारोदयमहकृतं संस्मरिष्यस्यवश्यम् ॥ ५७ ॥
अन्ये यात्रागतकरहरिद्वासतां ये विहारा
द्रष्टव्यास्ते न खलु भवता मन यन्या जिनार्चा ।
दिग्वेलानां कटुकमनिनां (?) द्रव्यनिष्कम्पृशां य-
स्तार्द्धिम्यं गुणिदितमुनेर्गोणगोमं विनार्च्यम् ॥ ५८ ॥

किंचिद्दूरे भवति च ततस्तत्र दुर्गोऽचलाख्यो
गौष्ठौ तस्मिन्विलसति चतुर्द्वारमुत्तुङ्गचैत्यम् ।
यादृक्तत्रोच्छ्रितमनुपमस्वर्णरीरीविमिश्रं
न क्ष्मापीठे कचिदधिगतं तादृगर्चाचतुष्कम् ॥ ५९ ॥
नीचैः किंचिद्भवति च ततः कान्तमर्हन्निशान्तं
श्रान्तं तारादिव नवरुचां गन्तुमूर्ध्वं········ ।
दुर्गस्याघोऽप्यथ जिनगृहं श्रीकुमारक्षितीन्दो-
र्वन्देथास्तेष्वनुपममते भावतः श्रीजिनार्चाः ॥ ६० ॥
अस्त्येषोऽद्रि····मुपचितो भूरिदिव्यौषधीभि-
स्तस्मादस्योपरि किर रसं चन्द्रिकाणां विशिष्य ।
एताः पुष्टिं दधतु च रयादौषधीश····तेऽङ्ग-
स्पर्शात्स्त्रीणां परममुदितं यौवनं भर्तृसङ्गः ॥ ६१ ॥
शैलेऽस्त्यस्मिन्प्रतिपदमहो लौकिकी तीर्थराजी
मिथ्यादृष्टिक्षितिपतिनतिप्राप्तगिष्यानुभावाम् ।
न द्रष्टव्या सुभग भवता कौतुकादप्यसौ य-
न्मालिन्यं स्यात्तदभिगमनाच्छुद्धसम्यक्त्वरत्ने ॥ ६२ ॥
इत्थं स्थित्वा स्थिरतरधियां लोकनीयोऽर्बुदाद्रि-
रस्मा दृष्टा जगति हि जनो गण्यते गर्भ एव ।
दृष्ट्वा चैनं व्रज गजपते सत्वरैः पादपातै-
र्नालस्यं स्यादुपकृतिकृतां त्वादृशां सुवमानाम् ॥ ६३ ॥
म्राम्यामस्माद्व्रज नगवरान्मारवीनां नवीनां
श्रीखण्डार्चां वपुषि रचयंश्चन्द्रिकाणां तरङ्गैः ।
सिद्धद्रङ्गे क्षणमथ सरस्वत्युपेते विलम्ब्य
राजद्रङ्गं भुवनविदितं यास्यसि त्वं निमेषात् ॥ ६४ ॥
तत्रालोक्य स्वपतितनयं राजतेजोऽभिरामं
दर्भाङ्कुरच्छलपुलकिता त्वामुपस्थास्यतेऽसौ ।

आमूलाग्रं तरलिततनुर्वीचिहस्तैरुदस्तै-
र्दूरादालिङ्गितुमिव रसात्साभ्रमत्यब्धिकान्ता ॥ ६५ ॥
एषा क्वापि प्रचुरतरभैः काननैः कम्रकूला
क्वापि क्रीडद्युवतिनिकरैरप्सरःसेवितेव ।
सङ्केषेव क्वचन विततैरम्बरैर्धौतमुक्तै-
र्मुक्ताशुक्त्यावलिरुचितरैः काप्यलंकारितेव ॥ ६६ ॥
प्रीणात्येषाखिल····रजनान्सत्पयःपानदाना-
दुत्सङ्गस्थान्रमयति च तान्केलिलीलाविलोलान् ।
दूरादालिङ्गति च विततैर्वीचिहस्तैः पुनीते
पूतान्नास्याः कथमभिहिता(?)नेयगादानगर्याः ॥ ६७ ॥
नद्याश्चास्याः सुचिरमुभयोः कूलयोः संनिविष्टा-
श्चक्राह्वानां हृदयदयिताश्चाश्रुभिः क्लिन्ननेत्राः ।
पादैर्मा स्वारतिमुपनयैर्विप्रयुक्ताः प्रसह्यैः
कण्ठमाणा नहि विरहिणः कृच्छ्रमीषत्सहन्ते ॥ ६८ ॥
आरूढानां भवनवलभीं गौर्जरीणां त्वदीक्षा
फुल्लाक्षीणां प्रियतमकरन्यस्तहस्तोत्पलानाम् ।
पश्यन्तीनां नगरमभितोऽलंकृतं चन्द्रिकाभि-
र्बन्धो निर्वापय निजकरैः सुष्ठु दृक्कैरवाणि ॥ ६९ ॥
क्रीडाहर्म्ये प्रियसहचरीप्रेरणाभिः प्रविष्टाः
शय्योत्सङ्गं प्रणयचटुभिः प्रेयसा प्रापिताश्च ।
व्रीडोद्रेकाद्गृहमणिमुपाहत्य कर्णोत्पलेन
कान्तोपान्ते तमसि कथमप्यासते या विमुग्धाः ॥ ७० ॥
मा कार्षीस्त्वं तरुणकिरणैर्जालमार्गप्रविष्टै-
स्तासां कान्तप्रसभहृतसच्चीवराणां प्रकाशम् ।
किं कुर्युः संवरितुमनलं भूषणस्रास्त्वदंशू-
न्मौग्ध्यादेवानवगतभयाध्यन्जसंवृत्युपायाः ॥ ७१ ॥ (युग्मम्)

तत्राट्टानां ततिषु निहिता भूरिरत्नप्रकारा-
स्तारास्ताराधव तव करैः सुष्ठु संयोगमेत्य ।
प्राप्तोल्लासा इव नवरुचो दर्शनीया भविष्य-
न्त्युल्लासं हि प्रथयति चिराद्बन्धुवाहानुषङ्गः ॥ ७२ ॥

लक्ष्मीस्तत्रारमति सततं भूरि कोटिध्वजानां
गेहे गेहे बहुविधधनैः क्लृप्तनानास्वरूपा ।
दृष्ट्वा चैनां सुभग भगिनीं त्यक्तचाञ्चल्यदोषां
चिन्तातीतं नियतमतुलं प्राप्स्यसि त्वं प्रमोदम् ॥ ७३ ॥

एकैकोऽस्य ध्रुवमुडुपते पाटकोऽन्यैः पुराणां
वृन्दैस्तुल्यो जनपदसमान्येव शाखापुराणि ।
····मैकैकं पृथुतरमुरुग्राममतुल्यं तदस्य
माहात्म्यं कः कथयितुमलं प्राप्तवाग्वैभवोऽपि ॥ ७४ ॥

मुक्तापुञ्जान्प्रतिपद····रून्रत्नराशीन्प्रवाल-
क्रूरान्शङ्खान्मृगमदसरान्वीक्ष्य भूयो वरांश्च ।
मा ज्ञासीस्त्वं स्वपितुरुदधेर्हन्त सर्वस्वमात्त-
द्रङ्गो ह्येष प्रकृतिगुणतो ज्येष्ठरत्नाकरोऽस्ति ॥ ७५ ॥

अस्य व्यक्त्या निशमनमहो वर्षलक्षानुपाति
सामान्येनामृतकर ततश्चैकदेशो विलोक्यः ।
तस्मिन्दृष्टे निखिलमपि तद्दृष्टमेवावधेयं
सर्वं दृष्टं वदति हि जनो वर्णिकादर्शनेन ॥ ७६ ॥

रत्नज्योतिः कनकरजतज्योतिरट्टावलीषु
स्त्रीपुंसाङ्गाभरणतरुणज्योतिरत्र प्रदीपे ।
दीपश्रेणीप्रकटितपटुज्योतिरिन्दोस्त्वदीय-
ज्योतिर्योगे भवतु विविधज्योतिषा संनिपातः ॥ ७७ ॥

तत्र मत्स्यापणमनुगृहं दीपकानां कदम्बे
स्तोकं पौराणिक इव निशि व्यञ्जयत्स्वर्धुनानम् ।

गत्वा प्रामाणिक इव महान्व्यञ्जयन्सर्वतोऽर्थं
वैलक्ष्यं तं तरलितकरः प्रापयिष्यत्यवश्यम् ॥ ७८ ॥
तस्माद्रङ्गाच्छमनककुभिः प्रस्थितस्यान्तरा ते
स्वर्गाकारं नगरमपरं लाटदेशस्य पुण्ड्रम् ।
दर्शं दर्शं मनसि परमप्रीतिराप्स्यते य-
न्नानालक्ष्मीरुचिरवपुषां तत्र वासो जनानाम् ॥ ७९ ॥
लङ्काशङ्कां मनसि दधती तोयराशौ ममज्जा-
तीते दम्भो वसति च पदे हन्त वस्नोकसारा ।
पातालं प्राविशदपमदा सापि भोगावती मां
दृष्ट्वा रम्यामनुपमतमां षाटपद्रीमभिख्याम् ॥ ८० ॥
मध्येऽस्त्यत्र प्रचुरसुख(प)मो मण्डपोऽत्यन्ततुङ्ग-
स्तत्र स्थित्वा चतसृषु दिशास्वीक्षणीयं त्वयेन्दो ।
द्रष्टासि द्राक्श्रियमनुपमामस्य विष्वक्पुरस्य
रम्यं ह्येतच्छुचिरुचिचतुर्द्वारचैत्यानुकारम् ॥ ८१ ॥
अत्यासन्नं भृगुपुरमितो यास्यसि प्रौढदुर्गं
दुर्गन्धाशोज्झितगतिसुरैर्भूरि पौरैः परीतम् ।
भूपीठे मत्सदृशमपरं वर्तते वा न वेति
द्रष्टुं रङ्गान्तरमिव समारूढमुच्चप्रदेशम् ॥ ८२ ॥
तस्योपान्ते सुखयति नदी नर्मदा नर्मदोर्मि-
स्तोमैः रोमोद्गममतिहिमैः कुर्वती नौस्थितानाम् ।
क्रीडद्गन्धद्विपमदरसोद्दामगन्धिप्रवाहा
चञ्चत्क्रीडावनघनतटा नाव्यनीरा गभीरा ॥ ८३ ॥
आलोक्य द्राग्भुवनममृतैस्तर्पयन्तं भवन्तं
सातं प्राप्तर्भवतु मुदिता नर्मदा ते तनूजा ।
प्राप्तोल्लासो भवतु च भवानप्यपेत्य क्षणेन
संसारे यज्जनितजनकप्रेमबन्धो गरीयान् ॥ ८४ ॥

तत्र स्थित्वा भृगुपुरमहाब्रप्रवातायनाग्रे
 दृष्ट्वा हृष्टो निजतनुभुवो धावनोद्भूलनानि ।
गच्छेः स्वच्छे तरणिनगरोपान्तभूमिप्रदेशे
 श्रीश्रीपूज्यक्रमविहरणध्वस्तपापप्रवेशे ॥ ८५ ॥
खर्जूरीणां विपिनपटलीतुङ्गतालद्रुमाणां
 तत्र श्रेणिस्तपनतनयातीरभूमिप्ररूढा ।
मन्दं मन्दं प्रसृमरमरुत्कम्पितां मौलिकम्पैः
 श्लाघामन्तः सृजति नगरस्यास्य लोकान्तरस्य ॥ ८६ ॥
पोतश्रेणीपरिचयमिषाच्चीरवेष्टद्विमाना
 मज्जद्वृन्दारकवरवधूर्नागरैर्नागरीभिः ।
स्वादुस्वच्छस्फटिकरुचिराम्भोभरैरुच्चरङ्गा
 तापी तत्र श्रयति तटिनी स्वर्गगङ्गानुकारम् ॥ ८७ ॥
एनां संगच्छति जलनिधिः मत्पदं द्विस्त्रिरस्याः
 सौभाग्येनातिशयगुरुणा कार्मणेनेव वश्यः ।
अभ्रच्छन्नस्त्वमपि भवितास्येतयोर्योगकाले
 पित्रोः पश्यन्क इह सुरतं लज्जते नेजडोऽपि ॥ ८८ ॥
तत्र श्रीमत्तपगणपतेः सद्विहारानिलोर्मि-
 पुष्टातङ्कां फलदलसुमस्फातिसंपन्नवृक्षाम् ।
दृष्टानेहः परिगतघनोद्भासि भूयिष्ठसस्यां
 द्रक्ष्यस्यर्हत्समवसरणापास्तदोषामिव क्ष्माम् ॥ ८९ ॥
नम्रीभूताः प्रतिपदमहो लुम्बिवृन्दैः फलानां
 स्वर्णैर्योषा इव घनवतां सन्ति कम्राः कदल्यः ।
स्निग्धच्छायैर्मधुरफलदैर्मण्डपैर्गोस्तनीनां
 गेहैर्ग्रामा इव सुमनसां तत्र कान्ता वनान्ताः ॥ ९० ॥
प्रीताः पुष्पैरविरलदला मण्डली चम्पकानां
 तत्रोद्याने तुलयति फलैर्लक्षिता पक्षवैश्च ।

नागश्रेणीममसृणसृणिं हेमघण्टावलीढां
........................................................॥ ९१ ॥

उद्यानानां नगरमभितः संततिर्भाति नाना-
वृक्षैर्लक्षैर्विविधसुमनःसंवितानां लतानाम् ।
क्रीडद्दम्पत्युचितकदलीमन्दिरैर्बालकानां
गेहैः क्रीडाभवनसरसी दीर्घिकावापिकाभिः ॥ ९२ ॥

पोतान्पोतानिव जलनिधेः कुक्षिनिक्षिप्तनाना-
वस्तुस्तोमांश्चतुर भविता पश्यतस्ते विलम्बः ।
जाग्रज्जैत्रध्वजपरिगताञ्जङ्गमद्रङ्गतुल्या-
न्पश्यन्नेतान्न भवति जनः कोऽत्र विक्षिप्तचेताः ॥ ९३ ॥

दुर्गो भर्गोज्ज्वलवपुरिहोत्कन्धरश्चन्द्रशाला-
दम्भात्सौधच्छविरुपचितो मौक्तिकच्छत्रशाली ।
नानायन्त्रप्रहरणधरो युद्धसज्जोग्रशस्त्रः
क्षत्रस्यैष श्रयति सुखिनां धैर्यगर्वाङ्कुरस्य ॥ ९४ ॥

गोपीनाम्नः किमिह सरसो वर्णयामो महत्त्वं
यत्क्षीराब्धेः कलयति कलां मथ्यमानस्य नो चेत् ।
आस्ते कुक्षौ किमिह निहिता मेरुरद्यापि किं वा
वीचिक्षोभो मथनजनितत्रासतोऽत्रागतस्य ॥ ९५ ॥

नीलच्छायां क्वचिदविरलैर्नागवल्लीदलौघैः
शुभ्रच्छायं क्वचन कुसुमैर्विस्तृतैर्विक्रयाय ।
पिङ्गे चङ्गैरतिपरिणतैः कुत्रचिच्चेक्षुदण्डै-
र्नानावर्णं पुरमिदमिति द्योतते सर्वदापि ॥ ९६ ॥

पोतोत्तीर्णाम्बुधिपरतटोद्भाविनो वस्तुवृन्दा-
न्द्राक्संख्यातुं क इह गणनाकोविदोऽपि क्षमेत ।
इष्टे मातुं क इव ····रजःस्वर्णमाणिक्यपुञ्जा-
न्पुञ्जानेमारुणतररुचींश्चाङ्कुरान्विद्रुमाणाम् ॥ ९७ ॥

रूप्यस्वर्णप्रकरघटनप्रोत्थितैष्टङ्कशाला-
गर्भोद्भूतप्रतिरवशतैस्तारतारैष्टकारैः ।
नात्र कापि प्रभवितुमलं दुष्टदौर्गत्यभूतः
पूतः क्षौद्रे ह्युपशमविधौ मन्त्रसारष्टकारः ॥ ९८ ॥
यत्र श्राद्धास्ततसुमनसो विश्वमान्या वदान्याः
संख्यातीता अमितविभवाः प्रौढशाखाः प्रशाखाः ।
कुत्राप्याद्याद्य(?)रकजनिताः संस्थिताः कल्पवृक्षाः
प्रादुर्भूतास्तपगणपतिप्रौढपुण्यानुभावात् ॥ ९९ ॥
शिल्पिप्रष्ठै रचितविविधानेकविज्ञानहृद्यं
हिङ्गुल्वाद्यैः कनककलचित्रैर्वर्णकैर्वर्णनीयम् ।
दत्तानन्दं स[हृ]दयहृदां वृन्दमर्हद्गृहाणां
चित्रैश्चित्रं क इह न जनो वीक्ष्य चित्रीयतेऽन्तः ॥ १०० ॥
मध्ये गोपीपुरमिह महाश्राद्धकोपाश्रयोऽस्ति
कैलासाद्रिप्रतिभट इव प्रौढलक्ष्मीनिधानम् ।
अन्तर्वर्त्यार्हतमतगुरुप्रौढतेजोभिरुद्य-
ज्ज्योतिर्मध्यस्थितमघवता ताविषेणोपमेयः ॥ १०१ ॥
भित्तौ भित्तौ स्फटिकसरुचौ कुट्टिमे कुट्टिमे च
संक्रामंस्त्वं सुभग भविता स्तात्तलक्षस्वरूपः ।
युक्तं चैतच्चरणिनगरोपाश्रयस्यान्यथार्थी-
र्द्रष्टुं शक्या न खलु वपुषैकेन युष्मादृशापि ॥ १०२ ॥
तस्य द्वाराङ्गणभुवि भवान्स्थैर्यमालम्ब्य पश्य-
न्साक्षाद्देवानिव नृजनुषो द्रक्ष्यति श्राद्धलोकान् ।
हस्त्यारूढानथ रथगतान्सादिनश्चार्थपी····(?)-
प्यर्थोम्भोतुं रसिकहृदयान्सीप्रमाटीकमानान् ॥ १०३ ॥
माद्यद्भूरिद्विपमदरसाधीयमालानिपान-
क्लिन्नां स्निग्धामिव घनजनव्रातसंमर्दखेदात् ।

द्वारं स्वस्याङ्गणभुवमतिप्रेङ्खितैस्तोरणानां
स्नेहादाश्वासयति मरुतां प्रेरणेनेव शश्वत् ॥ १०४ ॥
मध्ये तस्याः श्रमणवसतेर्मण्डपो यः क्षणस्य
सोऽयं कान्त्यानुहरति सतां तां सुधर्मां मघोनः ।
मुक्ता चन्द्रोदयपरिचितस्वर्णमाणिक्यभूषा-
श्रेणीदीप्तो विविधरचनाराजितस्तम्भशोभी ॥ १०५ ॥
मध्ये सिंहासनमनुपमं तस्य शक्रासनाभं
चेतश्चैतत्सखयति सतां ह्यपद्यानुकारम् ।
सालंकारं सुघटितमहासंधिबन्धं सुवर्णं
स्वच्छच्छायं सुललितचतुःपादसंपन्नशोभम् ॥ १०६ ॥
दीप्रोपान्तः स्वसदृशरुचा पादपीठेन नम्र-
क्ष्माभृच्छ्रेणीमुकुटघटनाकोमलीभूतधाम्ना ।
पङ्क्त्योडूनामिव गुणयुजा मौक्तिकस्वस्तिकेन
व्योम्नो लक्ष्मीं किल निदधतोपेन्द्रपादाङ्कितेन॥१०७॥(युग्मम्)
तत्रासीनं परिणततपस्तेजसा पीनमन्तः-
शुक्लध्यानोद्भवनवमहोद्द्योतितात्मस्वरूपम् ।
साक्षात्तीर्थंकरमिव जगज्जन्तुजीवातुभूतं
मूर्त्या शान्ताद्भुतमधुरया दत्तभव्यप्रमोदम् ॥ १०८ ॥
अभ्यस्तानां गुरुमुखकजादागमानां निधानं
साक्षादाद्यं गणधरमिवानेकलब्धिप्रधानम् ।
ज्ञानालोकप्रकटितजगत्तत्त्वदत्तावधानं
ध्यानं धर्म्यं हृदि निदधतं सिद्धिशय्योपधानम् ॥ १०९ ॥
आकर्षन्तं कठिणतपसां लीलया सिद्धिराज्यं
स्वर्गादीनां सुखमनुपमं मन्यमानं तृणाय ।
आ····माम्लायतिपृथुतपः कार्श्यतः श्वेतकान्तिं
सम्यग्लिप्तं किल धवलया लेश्ययान्तर्बहि···· ॥ ११० ॥

फुल्लाम्भोजध्वसितमसिति श्मश्रुकूर्चाङ्कुरोघा-
नाबिभ्राणं सितमुखपटीं चाननाम्भोजहंसीम् ।
हस्ताम्भोजे दधतममलां चैद्रुमीमक्षमालां
रागं भासामिव गुरुगुणैर्घूर्णमानां च चित्ते ॥ १११ ॥
अङ्के धर्मध्वजमुरुमहः शोभमानं दधानं
श्रेयोलक्ष्म्या प्रहितमिव सस्नेहया पुण्डरीकम् ।
प्रायः पद्मासनपरिचितं राजहंसोपसेव्यं
स्वाध्यायेनानुगतवदनं ब्रह्म सत्रह्मरूपम् ॥ ११२ ॥
कर्णोपान्ते पलितकपटात्सुष्टु विज्ञप्यमानं
स्थानभ्रंशव्यथितजरसैकान्तमेकान्तकान्तम् ।
स्वामिँल्लोकानजरममरं स्थानकं प्राप्तुमर्ह-
न्कुर्वन्मूमी विहरसि मया स्थीयतां क्वाधुनेति ॥ ११३ ॥
स्फूर्जद्भाग्यान्कतिचन दृशा स्निग्धयालोकयन्तं
कांश्चिचेपस्सितकलनया स्वायतीन्प्रीणयन्तम् ।
पूर्वोपात्तास्खलितसुकृतश्रेणिसौभाग्यभाजः
कांश्चिन्मौलौ करघटनया लब्धसिद्धीन्सृजन्तम् ॥ ११४ ॥
आशीर्दम्भान्नमदसुमतां हस्तविस्तारणेन
हस्तान्यस्ताविव निजवशौ धर्मलाभौ ददानम् ।
कल्याणानां निधिमिव महापारपारं महिमा-
माचाराणां भवनमवनाचाकरं सत्क्रियाणाम् ॥ ११५ ॥
अर्हद्धर्मं तनुभृतमियाल्लोकलोकोपकृत्यै
कैवल्यं वा विदितभुवनं पुंस्वरूपोपपन्नम् ।
प्रत्यक्षं वा सुकृतनिचयं शासनस्यार्हतस्य
मूलं निःश्रेयसपदतरोर्जङ्गमं कल्पवृक्षम् ॥ ११६ ॥
कष्टमार्तं नतमुमनसां जापमौनप्रयुक्तै-
र्मन्त्रं मन्त्रैरिव पटुतरैर्दोरिदुंकारनादैः ।

सम्यग्ग्रामसरणशमिताशेषपापोपतापं
लक्ष्मोष्णांशुप्रतिभटजगद्व्यापि तेजःप्रतापम् ॥ ११७ ॥
धैर्येणातिप्रथितयशसा स्वर्णशैलं जयन्तं
गां तीर्थेनातिशयगुरुणाम्भोनिधिं लज्जयन्तम् ।
सौन्दर्येणाप्रतिमहसा मन्मथं तर्जयन्तं
चारित्राद्यैः सुविहितगुणैर्विश्वमावर्जयन्तम् ॥ ११८ ॥
मौनध्यानाद्यमलविधिनाराधिताचार्यमन्त्रं
सेव्यं देवैरुपपदगतैर्ब्रह्मचर्यानुरक्तैः ।
नम्रप्राणिप्रकरविविधप्रार्थनाकामकुम्भं
दान्तं शान्तं मृदुमपमदं निःस्पृहं वीतदम्भम् ॥ ११९ ॥
विद्यावद्भिः शुभगतनुभिश्चारुचारित्रवर्यैः
श्रीगुर्वाज्ञाविनयनिपुणैः सेवितं साधुवर्यैः ।
श्रद्धालूनां पृथुपरिषदि प्रौढधाम्ना निषण्णं
त्रायस्त्रिंशैरिव परिगतं संपदीन्द्रं सुराणाम् ॥ १२० ॥
वन्देथाः श्रीतपगणपतिं सार्वमैदंयुगीनं
पीतं पुण्यप्रभवमुदधेर्नन्दनत्वं लभेथाः ।
प्राच्यैः पुण्यैः फलितमतुलैस्तावकीनैः सुलब्ध-
जन्मैतत्ते नभसि च गतिर्नोविनीते कृतार्था ॥ १२१ ॥
(चतुर्दशभिः कुलकम्)

अध्यानर्थैर्गलितमकलैः पापशङ्कैर्विलीनं
क्षीणं दोषैर्गलितमशिवैर्दुष्टकष्टैः प्रणष्टम् ।
रुग्णं रोगैर्मृतमनुशयैर्विप्रयोगैर्विनष्टं
सर्वातङ्कोपशमनिपुणं द्रक्ष्यसि श्रीगुरुं यत् ॥ १२२ ॥
पुण्यादस्माद्भृशमुपचितात्किंवदन्तीकलङ्क-
स्यैषा यास्यत्यमृतकर भो निष्कलङ्कं भवन्तम् ।
मन्येऽवश्यं शतगुणघृणिं सत्वरं वीक्षिताहे
सर्वाभीष्टं फलति न चिराद्दर्शनं हीदृशानाम् ॥ १२३ ॥

हृद्यातोद्यैर्मुखरमुरजैर्गायनानां च गीतै-
गायन्तीनां गुरुगुणगुणांश्चारवैः श्राविकाणाम् ।
स्वाध्यायैश्च श्रमणकृतिनां तर्कचर्चाविचारैः
शब्दाद्वैते भवति भवता स्थैर्यमानस्य तत्र ॥ १२४ ॥
विज्ञप्तिर्नो यदपि भवता दुष्करानाप्तपुंसा
पार्श्वे किं चामरहिमकराः पाठकास्ते सगोत्राः ।
संवीक्ष्यैवावसरमुचितं तत्र वाच्यं तथापि
नेतारो हि ध्रुवमवसरे प्रेक्षिणि प्रीतचित्ताः ॥ १२५ ॥
स्थित्वा तस्माद्विजनसमये श्रीगुरोः पादपद्मं
स्पृष्ट्वा स्वच्छैर्हिमकरकरैर्विज्ञ विज्ञप्यमेवम् ।
शिष्योऽणीयान्विनयविजयो द्वादशावर्तभाजा
विज्ञप्तिं व्याहरति महता वन्दनेनाभिवन्द्यम् ॥ १२६ ॥
यच्छ्रीपूज्यक्रमयुगमिलाद्दुर्गमध्ये नतोऽहं
प्रागासं नोपकृतिमिव तद्विस्मरामि क्षणार्धम् ।
श्रीतातानां यदुरुकृपया भाषणं स्मर्यमाणं
सर्वाङ्गीणं सपदि पुलकोद्भेदमाविष्करोति ॥ १२७ ॥
तुष्यत्युल्लासयति करणान्युल्लसन्त्येव भूयो
भूयो गच्छत्युपगुरुपदं गाढमुत्कण्ठते च ।
बाष्पक्लिन्ने सृजति नयने गद्गदान्कण्ठनादा-
नेतच्चेतः प्रणयरसतश्चेष्टते नैकधा मे ॥ १२८ ॥
निद्रादोषो जगति विदितो जागरश्चाप्रमादः
संप्रत्येतन्मम तु हृदये वैपरीत्येन भाति ।
निद्रा याते गुणमनुगुणं दर्शनं यो ददाना
जागर्या च प्रगुणमगुणं तत्र विघ्नं सृजन्तीम् ॥ १२९ ॥
जागर्याया जपति रसना युष्मदाख्या यथा मे
निद्रायामप्युपदिशमनाम्नैव दाक्षचर्यैव ।

तस्मात्संप्रत्यहनिशि····वा जागरानिद्रयोर्मे
मेदं लोका अपि पटुधियो जानते नापरीक्ष्यम् ॥ १३० ॥
शङ्कातङ्कैर्मलिनमगुणैरुत्सृजन्पूर्वपक्षं
सिद्धान्तं सद्विभव भवदाराधनं संश्रितोऽस्मि ।
संभाव्यस्तत्परमगुरुभिः स्निग्धया प्रेमदृष्ट्या
येनात्यर्थं फलितसकलप्रार्थितोऽर्थो भवेयम् ॥ १३१ ॥

इति श्रीमेघदूतच्छायाकाव्यमिन्दुदूताभिधं काव्यं समाप्तम् ।

---

## श्रीकृष्णानन्दकवीन्द्रविरचितं
## सुदर्शनचम्पूकाव्यम् ।[1]

नारायणपदाम्भोजमकरन्दमधुव्रतः ।
कृष्णानन्दः करोत्येनां चम्पूं सर्वमनोरमाम् ॥ १ ॥
शास्त्रं स्मृतिं च साहित्यं कृष्णानन्देन धीमता ।
अधीत्य क्रियते चम्पूः शं पूरयतु सर्वतः ॥ २ ॥
दंष्ट्रादुष्टकरालकालियशिरोभङ्गप्रसङ्गोच्छल-
द्रक्तव्यक्तजलौघपूर्णयमुनाकूलप्रवाहोत्सवः ।
स्फूर्जद्दुर्जयकंसकेशिमथनो राधामुखेन्दूदये
जीवञ्जीवसमः करोतु कुशलं श्रीकृष्णदेवः प्रभुः ॥ ३ ॥

अपि च ।

द्राग्द्वारस्थितदन्तिदन्तमुसलोत्पाटप्रतिष्ठोल्लस-
त्पौरस्त्रीपरिवेषपूरितमहाकीर्तिर्यशोदात्मजः ।
गोपीवृन्ददृगन्तपीवरमहापीयूषधाराशत-
स्नानक्लिन्नकलेवरः कलयतां कल्याणमव्याहतम् ॥ ४ ॥

---

१. 'वेदाकाशमुनीन्दु(१७०४)संमितशके–' इति ग्रन्थान्तिमपद्यतो वैक्रमे शरदि १८३९(=A. D. 1783) श्रावणशुक्लदशमीगुरुवासरे इमं ग्रन्थं रचितवाञ्छ्रीकृष्णानन्दकवीन्द्र इत्यवगम्यते.

अत्र लोकाः पृच्छन्ति—

कस्यैष क्रियते चम्पूर्महीपालशिरोमणेः ।
गद्यपद्यमयी लोके श्रुतिचित्तसुखप्रदा ॥ ५ ॥

अस्ति समस्तमहीमण्डलाखण्डलप्राययादववंशावतंसमहाराजाधिराजविराजितराजधानीविभूषितगढजयशलमेरो नाम देशः । स च

प्रथितवरसरोभिः सेवितः सर्वकालं
विविधविटपिवाटीवृन्दविद्योतितश्रीः ।
कृपिभिरुचितकाले सर्वलोकोपकारी
गढजयशलमेरो देशरत्नं विभाति ॥ ६ ॥

तत्रानेकनगरग्रामप्राकारपरिखाप्रासादप्रतोलिकाप्रकारैरभिमण्डितान्तर्मण्डलबर्हिर्मण्डलोद्देशः । गजगलदविरलमदजलचलत्सेककुशलमुसलाकारधारासंपातनिष्पातसंपादिताशेषभूकृषाणाङ्गनाजनप्रवर्तमानमहामहोत्सवाभिरामकामदेवोद्दामसजलजलदागमप्रतीतिप्रयोजकः । तत्रापि महापवित्रमतिसुप्रसिद्धं भाटीकुलम् ।

समस्तलोकेष्वतिसुप्रसिद्धं समस्तराजन्यगणस्तुतं च ।
भाटीकुलं सर्वगुणानुपेतं वर्णाश्रमाचारपरायणं च ॥ ७ ॥
भूमण्डले कुण्डलतामुपैति यदोः कुलं चन्द्रकलाविशुद्धम् ।
तत्रापि भाटीकुलमप्रमेयं समस्तभूमावतिशोभमानम् ॥ ८ ॥

भाटीकुलावतंसो दुर्जनशालो महीपालः ।
आसीत्प्रसिद्धजन्मा शंकरवर्मा सुतस्तस्य ॥ ९ ॥

एतस्याजनि राजनीतिदयितः सर्वार्थचिन्तामणिः
सर्वश्लाघ्यगुणः प्रतापतपनः प्रोचत्ससप्तार्णवः ।
प्रत्याशापरिपूरकः प्रतिदिनं कारुण्यवारांनिधिः
श्रीमद्वीरसुदर्शनो नृपवरो जीयात्सहस्रं समाः ॥ १० ॥

अपरं च ।

स्फूर्जद्दुर्जनशाल एष विनयी दाता महीमण्डले
भाटीवंशसमुद्भवोऽतिविदितः श्रीशंकरोऽस्यात्मजः ।

लोकानामुपकारकेण सुचिरं धात्रा धरामण्डले
वीरो धीरसुदर्शनोऽतिकरुणो राजा कृतोऽयं कृती ॥ ११ ॥
कुमार इव धूर्जटेः सुरपतेर्जयन्तो यथा
पठत्यनुदिनं गुरोर्निखिलबालविद्यां मुदा ।
सुदर्शनमहीपतेर्नृपतिचक्रचूडामणे-
र्यशस्करणसुन्दरो जयति बालवृन्दारकः ॥ १२ ॥
वेदव्याकरणादिशास्त्रकवितालंकारसाङ्गागम-
व्याख्यानस्फुरदिन्दुसुन्दरयशोवृन्देन देवात्मना ।
विश्वव्यापककामराजगुरुणा सोऽयं मुदा दीक्षितो
वीरो भूपसुदर्शनो यदुकुले भूमण्डलाखण्डलः ॥ १३ ॥
सुदर्शनो महाराजो विभाति क्षितिमण्डले ।
यथा शोभाकरश्चन्द्रो जगदानन्ददायकः ॥ १४ ॥
तस्यैषा क्रियते चम्पूः सुदर्शनमहीपतेः ।
दानसंमानसंपद्भिः सर्वेषां सुखदायकः ॥ १५ ॥

अतिप्रचण्डदोर्दण्डकलितासिदण्डखण्डीकृतारातिचक्रसीमन्तिनीसमुत्सारितशिरोवर्तिसिन्दूरधाराभरणसमस्तारुणीकृतदिग्वलयवर्तिबहुकालोपचीयमानविरहव्यथाकुलितचारुचक्रवाकमिथुनमिलनोच्छ्वासविश्वाससंभावकः सुदर्शनो नाम राजा विराजते मध्याह्नमार्तण्डमण्डलोपमप्रचण्डप्रद्योतविद्योतिताशेषदिगन्तरगहाप्रसिद्धमानसादिसरोवरालंकारप्रदोषमुद्रितसरोरुहोदरवर्तिमकरन्दलुब्धमधुपश्रेणीबन्धमोक्षणाकालप्रचारझाङ्कारोद्गीतयशोराजहंसः ।

स एष नृपभैरवः समरसीम्नि दुर्वारणः
समस्तधरणीपतिप्रथितलब्धयुद्धोत्सवः ।
यदीयरिपुनागरीनयनवारिसंपादित-
प्रसन्नसरसीरसी चरति कीर्तिहंसीगणः ॥ १६ ॥
प्रचण्डचण्डांशुसमप्रभावः पुरा न भूतो न च कोऽपि भावी ।
सुदर्शनो नाम महाबलोऽसौ यदोः कुले राजकुलावतंसः ॥ १७ ॥

सुदर्शनयशोगानं कस्य कस्य न रोचते ।
कृष्णानन्दसमुत्पन्नं किं पुनर्व्रजमण्डले ॥ १८ ॥

तस्यायं क्रमः—

वारंवारमुदारवारणघटासंघट्टसंभाविता-
रातिक्ष्मापतिवीरधीरजलधिप्रव्यक्तरक्तं पयः ।
पीत्वा वर्षति वैरिवारिजमुखीनेत्राम्बुयुग्मयशो-
मुक्ताः पुष्यति राजराज किमसिः किं स्वातिधाराधरः ॥१९॥

श्रीमद्वीरसुदर्शनाथ मृगयारम्भं विमुञ्चाङ्कतः
सातङ्कं हरिणः पते द्विजपतेर्भूयादनर्थो महान् ।
किं च त्वं चतुरोऽसि निर्मलयशःकर्पूरपूरश्रिया
साम्यं सौम्य समागमिष्यति सदा निर्दोषदोषाकरः ॥ २० ॥

सुदर्शनमहाराजे दानाय समुपागते ।
नृत्यन्ति गुणिनां गेहे कविता वनिता इव ॥ २१ ॥

सुदर्शनमहाराजे महादानं प्रकुर्वति ।
नृत्यन्त्यपि च गायन्ति दिक्षु भिक्षुकयोषितः ॥ २२ ॥

गृहं यदीयं स्फटिकाभिरामं संपूर्णकामं वृषभध्वजस्य ।
सेवां समासाद्य गुरोः प्रसादाच्छ्रीकामराजस्य महान्स तस्य ॥ २३ ॥

कवित्वशक्तिर्मधुरा च वाणी भाषासु गीर्वाणवचोमये च ।
यस्यास्ति भूमौ स धनी कुलीनः स पण्डितः सर्वगुणानुपेतः ॥ २४ ॥

साहित्यविद्यानिपुणः सदैव शास्त्रेषु सिद्धान्तसमस्तवेत्ता ।
ज्ञाता विशेषं कवितारसस्य दाता चिरं जीवतु सत्कवीनाम् ॥ २५ ॥

एतस्य द्वे भार्ये । दास्यश्च संजीवनी च ।

शुश्रूषणाय प्रतिपन्नभावा मनोरथज्ञा भुवि सुप्रसन्ना ।
पत्युः पदाम्भोरुहलुब्धभृङ्गी संगीतविद्यानिपुणस्य तस्य ॥ २६ ॥

पद्मेव कृष्णस्य, वृषध्वजस्य गौरीव गौरी, मकरध्वजस्य ।
रतीव, शक्रस्य शचीव, भूमौ सातोमरी वीरसुदर्शनस्य ॥ २७ ॥

सुवर्णदानेन समस्तकालं सातोमरी पीतमयं करोति ।
महीतलं राजतपुञ्जदानैः शुक्लं कदाचित्कुरुते समन्तात् ॥ २८ ॥

**सोही च—**

माणिक्यमुक्ताफलगुम्फितेन हारेण तस्या हृदयस्थितेन ।
नक्षत्रताराग्रहमण्डलानि विनिर्जितान्येव निर्जैर्मयूखैः ॥ २९ ॥
सुवर्णपात्रेण करस्थितेन सुवृत्तमुक्ताफलपूरितेन ।
नित्यान्वितं विप्रवरार्पितेन सोही यशश्चन्द्रमसं बिभाति ॥ ३० ॥

**संजीवनी च—**

गन्धर्वकन्या भुवि चित्रलेखा लोकोपकाराय कृतावतारा ।
संजीवनीमूर्तिमिषादशेषसौन्दर्यचातुर्यनिवासभूमिः ॥ ३१ ॥
विराजते सर्वगुणानुपेता संजीवनी कल्पलतेव भूमौ ।
कदापि यं पश्यति दूरतोऽपि तस्यापरिक्लिश्यति हेमवृष्टिः ॥ ३२ ॥
अधीतवेदस्तु सुदर्शनोऽसौ बाल्ये धनुर्वेदपरस्ततोऽभूत् ।
महाबलः पञ्चशराभिरामो दिने दिने यौवनमाततान ॥ ३३ ॥
गान्धर्वविद्यासु महाप्रवीणो वीणामृदङ्गादिषु तालदक्षः ।
तथापि नित्यं नृपतिर्गुणिभ्यो ददाति भूरि द्रविणं महेच्छः ॥ ३४ ॥
मल्लैरनेकैः कृतमुष्टियुद्धप्रहारसंहारविचेष्टितैश्च ।
खड्गप्रहारोत्पतनप्रकारं गुरोः सकाशादधिगम्य सद्यः ॥ ३५ ॥
शरैरनेकैर्निजवैरिवंशं विपाटयामास युवा सहासम् ।
ग्रन्थिप्रहारैः सकलं निरीक्ष्य लक्षीकृतं चारुविशालवक्षाः ॥ ३६ ॥
वीणारसं केवलमेष एव जानाति विख्यातविलासहासः ।
.................................................. ॥ ३७ ॥

**यत्सभायां वाराङ्गनाः—**

संगीतविद्यानिपुणाः सदैव नृत्यन्ति गायन्ति सुवर्णवर्णाः ।
वाराङ्गनाश्चन्दनकुङ्कुमाढ्याः सुभाषितं कामकलाप्रवीणाः ॥ ३८ ॥
प्रफुल्लपङ्केरुहपत्रनेत्रा मृदङ्गवाद्यादिभिरभ्युपेताः ।
यदक्षिपातेन मनो मुनीनां सद्यो नवं चञ्चलतामुपैति ॥ ३९ ॥

ता एव गायन्ति विलासवल्यः स्वभावतः कोकिलकण्ठनादैः ।
पदप्रहारैरिव कामदेवं विबोधयामासुरधीतविद्याः ॥ ४० ॥
एतादृशी यत्र च दृश्यते न संश्रूयते किं तु विदूरतोऽपि ।
नेत्रं नभोमण्डलमेव नैव जातं यदा किं चरितं विधातुः ॥ ४१ ॥
ब्राह्मे मुहूर्ते किल सावधानो गुरोः पदाम्भोरुहचिन्तनाय ।
सरोरुहाक्षोऽतिविनीतनिद्रो मनो ददौ पूर्णमनोरथश्रीः ॥ ४२ ॥
ततः परं स्मृत्यनुसारतोऽसौ धर्मार्थकामानतिदुर्लभांश्च ।
स चिन्तयामास वरप्रकारैः कुलोचितैः सर्वजनप्रतिष्ठैः ॥ ४३ ॥
ततः समुत्थाय महासुशीलः स्नानादिकं साङ्गमतो विधाय ।
शुक्लाद्विवासाः कृतचन्दनादिक्रियानुलेपः कृतभूतशुद्धिः ॥ ४४ ॥
देवोपमो देवगृहं गतोऽसौ सुदर्शनो नाम नृपावतंसः ।
कालेयकाद्यैरतिसुप्रसिद्धैः सुगन्धिभिः पूजनमाचकार ॥ ४५ ॥
दशोपचारैः खलु षोडशेन पञ्चोपचारेण च पञ्चदेवान् ।
स पूजयित्वातिविशुद्धचेता नित्यं च कर्मापि तथाकरोत्सः ॥ ४६ ॥
नित्यं च दानं कुरुते नृपोऽसौ सुवर्णरत्नादिकमप्रमेयम् ।
द्विजेभ्य एव प्रतिपादयित्वा योगालयं दिव्यमुपागतोऽसौ ॥ ४७ ॥
दिव्यासनस्थोऽतिविशुद्धचित्तो वायुं समाकर्षति योगयुक्तः ।
शनैः शनैरुच्छ्रितासनोऽसौ योगीश्वरो योगविशारदश्च ॥ ४८ ॥
ततो लघूकृत्य वपुः स्वकीयमाकाशसंस्थं विधिवच्चकार ।
ततो गुरूकृत्य सुनिश्चलोऽसौ गुरोः प्रसादाद्गिरिवच्चकार ॥ ४९ ॥
एवंविधैर्योगवरैः प्रसिद्धैर्युतो यदूनां नयनाभिरामः ।
संसारसौख्याय गृहस्थितोऽपि योगीश्वरोऽस्मै नृपतिर्विभाति ॥ ५० ॥
मुक्त्यर्थमेकः श्रुतिभिः प्रसिद्धः सर्वस्य शास्त्रस्य हि योगमाहुः ।
उक्तस्ततः सर्वगुणानुपेता जनाः समाश्रित्य तरन्ति पारम् ॥ ५१ ॥
अहोऽनुकम्पा वसतो जगत्यां महीपतिर्वीरसुदर्शनोऽसौ ।
योगीश्वरोऽयं समधीतविद्यो ददाति वित्तं भुवि याचकेभ्यः ॥ ५२ ॥

यस्य सभायां पण्डिताः—

प्रमेयसिद्धान्तपदार्थवार्ता विचारयन्तः कथयन्ति सारम् ।
समस्तलोकेष्वतिदुर्लभं च ते पण्डिता यस्य गृहे वसन्ति ॥ ५३ ॥

कवयश्च—

सुधास्यन्दसंदोहसंदेहकारि कचित्काव्यभव्याक्षरं नर्तयन्ति ।
कचिद्गीतसंगीतविधानवद्याः कचिद्दण्डनीतिं विनीता वदन्ति ॥ ५४ ॥
कचिल्लोलरोलम्बमाताकुलाङ्गान्मतङ्गानहो देहि देहीति वाचः ।
कचिद्वाजिराजीरिति स्पष्टवाचां विवर्तुं मुदा सर्वदा नर्तयन्ति ॥ ५५ ॥

ज्योतिषिकाश्च—

भविष्यदर्थं सततं ब्रुवन्ति मध्येसभं वीरसुदर्शनस्य ।
ज्योतिर्विदः सर्वगुणानुपेताः स्ववृत्तिमन्तो नृपतेः प्रसादात् ॥ ५६ ॥

वैद्याश्च—

अधीतविद्या निपुणाः सदैव दृष्ट्वा वदन्ति प्रतिपन्नरोगान् ।
निदानतो रोगपरीक्षया च चिकित्सया सर्वजनोपचारान् ॥ ५७ ॥

मल्लाश्च—

मनागनायासरसेन येन चूर्णीकृतः प्रस्तर एव सद्यः ।
स तादृशो मल्लवरः सभायां विराजते वीरसुदर्शनस्य ॥ ५८ ॥

नटाश्च—

संमोहयन्तो निजनर्तनेन समस्तलोकानपि पण्डितांश्च ।
नानाविधं वेषधरं वहन्ति रसेषु सर्वेषु विपश्चितश्च ॥ ५९ ॥

शैलूषकाश्च—

वंशं समारोहति निर्विशङ्कमधः पतत्यूर्ध्वत एव सद्यः ।
तथैव तिष्ठत्यपि वंशमूले कुत्रापि नाघातकथाप्रसङ्गः ॥ ६० ॥

नटी च—

तथा तथा गायति चन्द्रकान्तमुखं वहन्ती मधुरस्वरेण ।
यथा यथा श्रोत्रगतेन सद्यो मोहं समायान्ति महर्षयोऽपि ॥ ६१ ॥

वन्दिनश्च—

प्रभातकाले सततं पठन्ति सत्काव्यमुच्चैःस्वरमाश्रिताश्च ।
सद्वन्दिनो वीरजनस्य चित्तं युद्धाय बद्धादरतां नयन्ति ॥ ६२ ॥

समस्तधरणीपालप्रसिद्धवरकार्मुकः ।
प्रतिष्ठापूरकः पूरैः पूरयन्निव सर्वतः ॥ ६३ ॥

एकदा स एव सुदर्शनो महाराजो मृगयाव्याजेन वैरिग्रामासन्नो बभूव ।

श्रीमद्वीरसुदर्शनं सुविदितं युद्धाय बद्धादरं
मत्वा दारुणसानुमाश्रितवती व्यालोलचेलाञ्चला ।
नेत्रोत्पन्ननवीननीरकणिकाव्याजेन नम्रानना
दत्ते वैरिविलासिनी प्रतिदिनं मुक्ताफलानां तुलाः ॥ ६४ ॥

ततोऽतिदूरं यमुनानिकुञ्जमाखेटकार्थं नृपतिः प्रतस्थे ।
विलासिनीभिर्वरसैनिकैश्च करेणुकारोहणतत्पराभिः ॥ ६५ ॥

मातङ्गमालोपरिसंस्थितेन ध्वजेन चामीकरचिह्नितेन ।
वाताभिघातैरतिसुन्दरेण स शोभमानो मृगयां जगाम ॥ ६६ ॥

इतस्ततो हस्तिकराभिघातनिपातसंजातमहाध्वनीनाम् ।
मार्गस्थितानां विबुधद्रुमाणां पङ्क्तिक्रमः केवलमारराज ॥ ६७ ॥

गलन्मदाः केचिदमी मतङ्गा विदूरतः सैनिकतः प्रयान्ति ।
दन्ताहतानेकविशालवृक्षशाखासमालंकृतभूमिभागाः ॥ ६८ ॥

गच्छन्ति गर्जन्ति सहस्रशोऽन्ये धावन्ति सर्वत्र विना विचारम् ।
दन्तैः समुत्पाट्य तरुं समग्रं शुण्डाभिघाताहतनीपमालाः ॥ ६९ ॥

महागजाः प्रोद्धतमहारा विशृङ्खला भीमतरा बभूवुः ।
धूलीभिरासादितभूषणाङ्गा दन्ताभिघाताहतपर्वताश्च ॥ ७० ॥

महीभुजो वीरसुदर्शनस्य समस्तराजन्यपरिस्फुरत्कीर्तेः ।
सर्वाणि कार्याणि समस्तकाले विनोभयानानि गुरोः प्रसादात् ॥ ७१ ॥

लक्ष्मी दया यस्य गृहे वसन्ति कथं स दाक्ष्यो नगुभिर्वचोभिः ।
कलाभिघातो न कदापि तेषामहो गिरिन्द्रनगर्दव ॥ ७२ ॥

विराजते चञ्चलवाजिराजी सुवर्णमाला मणिभूषिताश्च।
विशुद्धहेमासनपृष्ठलग्नवल्गूप्रचारोच्छ्रितकन्धराश्च ॥ ७३ ॥
महाजवा ह्रस्वविशुद्धकर्णा मृगानुगाः पक्षधरा इवोर्व्याम्।
वाहा विशिष्टाः कृतचारुचेष्टाः सदश्ववाहैरभिशिक्षिताश्च ॥ ७४ ॥
नृत्यन्ति धावन्ति मनोरथज्ञाः समीरणा एव हि मूर्तिमन्तः।
वराश्ववाहोर्ध्वकृतोरुवाहुसंभावनालङ्घितकन्दराश्च ॥ ७५ ॥
हयं समारुह्य नृपाधिराजः सुदर्शनोऽयं नकुलावतारः।
गतागतानेकविधप्रकारविचारसंभारमथाकरोत्सः ॥ ७६ ॥
मृगाननेकान्मृगयासु हत्वा शस्त्रेण चास्त्रेण करस्थितेन।
स ह्यापयत्येव करस्थितेन श्येनादिना पक्षिवराणि भूयः ॥ ७७ ॥
पुनः प्रतस्थे मृगयानुबन्धी स बन्धुवर्गैर्वरवाजिसंस्थैः।
पदातिवर्गैर्गणनातिरिक्तैरितस्ततः शीघ्रतरप्रयाणैः ॥ ७८ ॥
शार्दूलसंघान्ददर्शेऽथ भूप उपत्यकायां यदुवंशवीरः।
ततो विशङ्कः पुरुषावतंसो जातप्रहर्षः कृतसंनिधानः ॥ ७९ ॥
दृष्टास्त्वनेका महिषास्तदानीं शृङ्गप्रहाराहतवृक्षसंघाः।
सुदर्शनेनाप्रतिमेन तेन महामतङ्गोपमखङ्गिनश्च ॥ ८० ॥
तीक्ष्णेन खड्गेन करस्थितेन शरेण चामीकरभूषितेन।
सुव्यक्तहासेन विना प्रयासं यथैव दृष्टा निहतास्तथैव ॥ ८१ ॥

यस्तु दुःशासनोऽपि न परस्त्रीवस्त्रापहारकः, यस्तु कृपाचार्योऽपि कृतराजसेवः, यस्तु कुमारोऽपि न षाण्मातुरः, यस्तु युधिष्ठिरोऽपि न कौन्तेयः, यस्तु धनंजयोऽपि न सोदरापहन्ता, यस्तु भीमसेनोऽप्यकृतान्याययुद्धः, यस्तु पावकोऽपि नाश्रयासः, यस्तु धर्मराजोऽपि नान्तकः, यस्तु प्रचेता अपि न पाशी, यस्तु पुण्यजनोऽपि न दनुजः, यस्तु जगत्प्राणोऽपि नातीन्द्रियः, यस्तु धनदोऽपि न कुबेरः, यस्तु सकलार्थप्रदोऽपि न दिगम्बरः, यस्तु प्राचीदिक्पतिरपि न गोत्रभित्, यस्तु गणपतिरपि नैकदन्तः,

१. अयं ग्रन्थ एतावानेव संप्राप्तोऽस्माभिः.

वेदाकाशमुनीन्दु (१७०४) संमितशके मासे तथा श्रावणे
पक्षे वै धवले तिथौ दशमिते वारे गुरौ शोभने ।
कृष्णानन्दकवीन्द्रनिर्मितमहाचम्पूरियं पूर्यतां
कामं वीरसुदर्शनस्य नृपतेर्विश्वस्य विद्याजुषः ॥

इति श्रीकृष्णानन्दकवीन्द्रविरचिता सुदर्शनचम्पूः समाप्ता ।

---

श्रीकुसुमदेवविरचितं

## दृष्टान्तकलिकाशतकम् ।

शिवस्मरणमेवैकं संसारान्तकनाशनम् ।
घनौघो घोरदावाग्निनिर्वापणपटुर्भवेत् ॥ १ ॥
साधुरेव प्रवीणः स्यात्सद्गुणामृतवर्णने ।
नवचूताङ्कुरास्वादकुशलः कोकिलः किल ॥ २ ॥
दुर्जनो दूषयत्येव सतां गुणगणं क्षणात् ।
मलिनीकुरुते धूमः सर्वथा विमलाम्बरम् ॥ ३ ॥
यथा दोषो विभात्यस्य जनस्य न तथा गुणः ।
प्रायः कलङ्क एवेन्दोः प्रस्फुटो न प्रसन्नता ॥ ४ ॥
विवेक एव व्यसनं पुंसां क्षपयितुं क्षमः ।
अपहर्तुं समर्थोऽसौ रविरेव निशातमः ॥ ५ ॥
प्रायः सन्त्युपदेशार्हा धीमन्तो न जडाशयाः ।
तिलाः कुसुमसौगन्ध्यवाहिनो न यवाः क्वचित् ॥ ६ ॥
चिन्त्यते नय एवादावगन्तुं समुपेप्सुभिः ।
विनम्य पूर्वं सिंहोऽपि हन्ति हस्तिनमोजसा ॥ ७ ॥
संस्थितस्य गुणोत्कर्षः प्रायः प्रस्फुरति स्फुटम् ।
दग्धस्यागरुखण्डस्य स्फारीभवति सौरभम् ॥ ८ ॥
मनस्विदर्प्यं पश्ये रोपेणैव प्रसन्नताम् ।
महाना उपउदक्षारः प्रसादं लभतेतराम् ॥ ९ ॥

उत्तमः क्लेशविक्षोभं क्षमः सोढुं नहीतरः।
मणिरेव महाशाणघर्षणं न तु मृत्कणः॥ १०॥
स्वजातीयं विना वैरी न जय्यः स्यात्कदाचन।
विना वज्रमणिं मुक्तामणिर्भेद्यः कथं भवेत्॥ ११॥
सज्जना एव साधूनां प्रथयन्ति गुणोत्करम्।
पुष्पाणां सौरभं प्रायस्तनुते दिक्षु मारुतः॥ १२॥
उपकर्तुं यथा स्वल्पः समर्थो न तथा महान्।
प्रायः कूपस्तृषां हन्ति सततं न तु वारिधिः॥ १३॥
सति शीले गुणा भान्ति पुंसां शौर्यादयो यथा।
यौवने सदलंकाराः शोभां बिभ्रति सुभ्रुवः॥ १४॥
जडः प्रभवति प्रायो दुःखं बिभ्रति साधवः।
शीतांशावुदिते पद्मं संकोचं याति वारिणि॥ १५॥
गुणेन स्पृहणीयः स्यान्न रूपेण युतो नरः।
सौगन्ध्यहीनं नादेयं पुष्पं कान्तमपि क्वचित्॥ १६॥
कश्चित्कस्यचिदेव स्यात्सुहृद्विश्रम्भभाजनम्।
पद्मं विकासयत्यर्कः संकोचयति कैरवम्॥ १७॥
ईश्वराः पिशुनाञ्शश्वत्पुष्णन्तीति किमद्भुतम्।
प्रायो निभय एवाहीन्द्रिजिह्वान्दधतेतराम्॥ १८॥
संपद्यास्ते परैः साकं विपदि स्वजनैर्जडः।
जृम्भतेऽम्भोरुहं भृङ्गैः शुष्यत्युदकशैवलैः॥ १९॥
नीचावमानमलिना यो भुङ्क्ते संपदं पुमान्।
लशुनाक्तां स कर्पूरचर्चां वितनुते तनौ॥ २०॥
व्यसनानन्तरं सौख्यं स्वल्पमप्यधिकं भवेत्।
काषायरसमास्वाद्य स्वाद्वतीवाम्बु विद्यते॥ २१॥
गुणानामन्तरं प्रायस्तज्ज्ञो जानाति नेतरः।
मालतीमल्लिकामोदं घ्राणं वेत्ति न लोचनम्॥ २२॥

प्रभूतवयसः पुंसो धियः पाकः प्रवर्तते ।
जीर्णस्य चन्दनतरोरामोद उपजायते ॥ २३ ॥
कामाय स्पृहयत्यात्मा संयतोऽपि मनीषिणः ।
वीथीनियमितोऽप्युक्षा शष्पमासाद्य धावति ॥ २४ ॥
धनागमेऽधिकं पुंसां लोभमभ्येति मानसम् ।
निदाघकाले प्रालेयः प्रायः शैत्यं वहत्यलम् ॥ २५ ॥
सहजोऽपि गुणः पुंसा साधुवादेन वर्धते ।
कामं सुरसलेपेन कान्तिं वहति काञ्चनम् ॥ २६ ॥
निन्दां यः कुरुते साधोस्तथा स दूषयत्यसौ ।
खे भूतिं यः क्षिपेदुच्चैर्मूर्ध्नि तस्यैव सा पतेत् ॥ २७ ॥
स्वभावं नैव मुञ्चन्ति सन्तः संसर्गतोऽसताम् ।
न त्यजन्ति रुतं मञ्जु काकसंपर्कतः पिकाः ॥ २८ ॥
संपत्तौ कर्कशं चित्तं खलस्यापदि कोमलम् ।
शीतलं कठिनं प्रायस्तप्तं मृदु भवत्ययः ॥ २९ ॥
प्रायः प्रकुप्यतितरां प्रीत्यैव मत्सरी जनः ।
नयनं स्नेहसंपर्कात्कालुष्यं समुपैत्यलम् ॥ ३० ॥
शुभं वाप्यशुभं कर्म फलकालमपेक्षते ।
शरद्येव फलत्याशु शालिर्न सुरभौ क्वचित् ॥ ३१ ॥
भोगेच्छा नोपभोगेन भोगिनां जातु शाम्यति ।
लवणेनान्तरालेन तृष्णा प्रत्युपजायते ॥ ३२ ॥
दुर्लभोऽप्युत्तमः प्राय स्वजातीयेन लभ्यते ।
कर्णकोटरगं वारि वारिणैवाकृष्यते ॥ ३३ ॥
जन्तोर्निरुपभोगस्य दृश्यते भुवि न्यक्षिता ।
वाताशिनो द्विजिह्वत्वं विहितं पश्य वेधसा ॥ ३४ ॥
ऊर्जितं सज्जनं दृष्ट्वा द्वेष्टि नीचः पुनः पुनः ।
कवलीकुरुते स्वस्थं विधुं दिवि विधुंतुदः ॥ ३५ ॥

न लभन्ते विनोद्योगं जन्तवः संपदां पदम् ।
सुराः क्षीरोदविक्षोभमनुभूयामृतं पपुः ॥ ३६ ॥
संयतं कोमलं चित्तं साधोरापदि कर्कशम् ।
सुकुमारं मधौ पत्रं तरोः स्यात्कठिनं शुचौ ॥ ३७ ॥
आकरः कारणं जन्तोर्दौर्जन्यस्य न जायते ।
कालकूटः सुधासिन्धोः प्राणिनां प्राणहारकः ॥ ३८ ॥
गुणदोषाववाप्येते पुंसां संशीलनाद्बुधैः ।
लेभे पीयूषगरले मन्थनादम्बुधेः सुरैः ॥ ३९ ॥
स्वभावं न जहात्येव साधुरापद्गतोऽपि सन् ।
कर्पूरं पावकस्पृष्टं सौरभं लभतेतराम् ॥ ४० ॥
न व्याप्तिरेषा गुणिनो गुणवाञ्जायते ध्रुवम् ।
चन्दनोऽनलसंदग्धो न भस्म सुरभि क्वचित् ॥ ४१ ॥
अप्यापत्समयः साधोः प्रयाति श्लाघनीयताम् ।
विधोर्विधुंतुदास्कन्दविपत्कालोऽपि सुन्दरः ॥ ४२ ॥
विना परीक्षां नो तत्त्वं प्रसिद्धं जायते सतः ।
स्वधर्मबन्धान्नो शुद्धिर्जायते कर्षणं विना ॥ ४३ ॥
प्राप्य वित्तं जडास्तूर्णं निर्वृतिं यान्ति नान्यथा ।
तोयमासाद्य गर्जन्ति न रिक्ताः स्तनयित्नवः ॥ ४४ ॥
कार्यापेक्षी जनः प्रायः प्रीतिमाविष्करोत्यलम् ।
लोभार्थी शौण्डिकः शष्पैर्मेषं पुष्णाति पेशलैः ॥ ४५ ॥
दुर्जनो जीयते युक्त्या निग्रहेण न धीमता ।
निपात्यते महावृक्षस्तत्समीपक्षितिक्षयात् ॥ ४६ ॥
सुखदुःखे समे स्यातां जन्तूनां क्लेशहेतुके ।
मूर्ध्नि स्थितानां केशानां भवेतां स्नेहछेदने ॥ ४७ ॥
दुष्टदुर्जनदौरात्म्यैः सज्जने रज्यते जनः ।
आरुह्य पर्वतं पान्थः सानौ निर्वृतिमेत्यलम् ॥ ४८ ॥

स्वभावसुन्दरं वस्तु न संस्कारमपेक्षते ।
मुक्तारत्नस्य शाणाश्मघर्षणं नोपयुज्यते ॥ ४९ ॥
शोभते विदुषां मध्ये नैव निर्गुणमानसः ।
अन्तरे तमसां दीपः शोभते नार्कतेजसाम् ॥ ५० ॥
युक्त्या परोक्षं बाधेत विपक्षक्षपणक्षमः ।
शोषयत्यचिरेणैव प्रान्तरस्थमलं पयः ॥ ५१ ॥
दुर्गदेशं प्रविष्टो हि शूरोऽप्येति पराभवम् ।
गाढपङ्कनिमग्नाङ्गो मातङ्गोऽप्यवसीदति ॥ ५२ ॥
नयेनाङ्कुरितं शौर्यं जयाय न तु केवलम् ।
अन्ययुक्तं विषं भुक्तं पथ्यं स्यादन्यथा मृतिः ॥ ५३ ॥
मृदुभिर्बहुभिः शूरः पुंभिरेको न बाध्यते ।
कपोतपोतकैरेकः श्येनो जातु न बाध्यते ॥ ५४ ॥
येनात्मा पण्यतां नीतः स एवान्विष्यते जनैः ।
हस्ती हेमसहस्रेण क्रीयते न मृगाधिपः ॥ ५५ ॥
*गुणो गुणान्तरापेक्षी स्वरूपख्यातिहेतवे ।*
स्वभाववाल्यं लावण्यं तारुण्येन मनोहरम् ॥ ५६ ॥
सुलभं वस्तु सर्वस्य न यात्यादरणीयताम् ।
स्वदारपरिहारेण परदारार्थिनो जनाः ॥ ५७ ॥
विकृतं निजमात्मानं वस्त्रैः संस्कुरुते जडः ।
परेभ्यः स्वशरीरस्य के वा भूषां वितन्वते ॥ ५८ ॥
क्षणक्षयिणि सापाये भोगे रज्यन्ति नोत्तमाः ।
संत्यज्याम्भोजकिञ्जल्कं न प्रार्थयति शैवलम् ॥ ५९ ॥
असंभवगुणस्तुत्या जायते स्वात्मनस्त्रपा ।
कर्णिकारं सुगन्धीति वदन्केनोपहस्यते ॥ ६० ॥
धनाशया सत्कीकारः कस्य नाम न जायते ।
दूरादामिषलोभेन बध्यते खेचरः खगः ॥ ६१ ॥

तटस्थैः स्थापिताश्चेतो विशन्ति गुणिनां गुणाः ।
उत्कोचितानां पद्मानां गन्धो वायुगिराहृतः ॥ ६२ ॥
निजाशयवदाभाति पुंसां चित्ते पराशयः ।
प्रतिमा मुखचन्द्राभे कृपाणे याति दीर्घताम् ॥ ६३ ॥
अधमं बाधते भूयो दुःखवेगो न तूत्तमम् ।
पादद्वयं व्रजत्याशु शीतस्पर्शो न चक्षुषी ॥ ६४ ॥
गुणवान्सुचिरस्थायी न देवोऽप्यभिजायते ।
तिष्ठत्येकां निशां चन्द्रः श्रीमान्संपूर्णमण्डलः ॥ ६५ ॥
यत एवागतो दोषस्तत एव निवर्तते ।
अग्निदग्धस्य विस्फोटशान्तिः स्यादग्निना ध्रुवम् ॥ ६६ ॥
स्वधियो निश्चयो नास्ति यस्य संभ्रमते स्वयम् ।
प्रवातबालपत्रस्थः पटस्तत्र निदर्शनम् ॥ ६७ ॥
कथाप्रबन्धे वन्ध्येऽपि कश्चिदेवानुरज्यते ।
प्रायश्चासादयत्यन्तः श्वसनि····संकैकसम(?) ॥ ६८ ॥
बुद्धिमत्ताभिमानः को भवेत्प्रज्ञोपजीविनाम् ।
अन्यदीयैरलंकारैर्नाहंकारो विभूषणे ॥ ६९ ॥
उत्तमोऽप्यधमस्य स्याद्याच्ञानम्रकरः क्वचित् ।
कौस्तुभादीनि रत्नानि ययाचे हरिरम्बुधिम् ॥ ७० ॥
प्रयत्ने समके केचिदेव स्युः फलभागिनः ।
क्षीरोदमथनाद्देवैरमृतं प्रापि नासुरैः ॥ ७१ ॥
गुणैः पूजा भवेत्पुंसां नैकस्माज्जायते कुलात् ।
चूडारत्नं शशी शंभोर्यानमुच्चैःश्रवा हरेः ॥ ७२ ॥
भोगः परोपतापेन पुंसां दुःखाय न स्थिरः ।
पानमप्यसृजः क्षिप्रं स्वपीडायै जलौकसाम् ॥ ७३ ॥
नोपभोगपरानर्थान्कोऽपि संचिनुते चिरम् ।
आस्रवः किमलंकारानात्मन्याद्त्य कुर्वते ॥ ७४ ॥

विवर्णवचनैर्मन्युर्गूढोऽप्यन्तः प्रकाशते ।
इन्धनान्तरसंस्थैश्च ज्वलत्यग्निः पयःकणैः ॥ ७५ ॥
निकटस्थं गरीयांसमपि लोको न मन्यते ।
पवित्रामपि यन्मर्त्या न नमस्यन्ति जाह्नवीम् ॥ ७६ ॥
स्वजनः स्वात्मवज्जन्तुर्ज्ञायते गुणवान्परैः ।
गोपैर्गोपवदज्ञायि हरिर्देवैर्जगत्पतिः ॥ ७७ ॥
उत्तमस्तोपमायाति तदङ्गः पोष्यते यदि ।
वृक्षः प्रसीदति प्रायः पादाभ्यङ्गेन न स्वयम् ॥ ७८ ॥
सर्वत्र गुणवानेव चकास्ति प्रथिते नरे ।
मणिर्मूर्ध्नि गले बाहौ पादपीठेऽपि शोभते ॥ ७९ ॥
उत्तमं सुचिरं नैव विपदोऽपि भवन्त्यलम् ।
राहुग्रसनसंभूतक्षणो विच्छादयेद्विधुम् ॥ ८० ॥
प्रायः स्वभावं मुञ्चन्ति सन्तः संसर्गतोऽसताम् ।
चण्डाश्चण्डातपात्पादा हिमांशोरमृतस्रजः ॥ ८१ ॥
तुल्यं परोपतापित्वं क्रुद्धयोः साधुनीचयोः ।
न दाहे ज्वलतोर्भेदश्चन्दनेन्धनयोः क्वचित् ॥ ८२ ॥
न भाति वाञ्छा वैजात्ये न देवा भान्ति वादिनि ।
अञ्जनं दूषणं वक्त्रे भूषणं किल लोचने ॥ ८३ ॥
दुर्भगः स्यात्प्रकृत्या यो विभूत्यापि स तादृशः ।
गोमयः श्रीनिवासोऽस्ति न तथापि मनोहरम् ॥ ८४ ॥
गुणानर्चन्ति जन्तूनां न जातिं केवलां क्वचित् ।
स्फाटिकं भाजनं भग्नं काकिण्यापि न गृह्यते ॥ ८५ ॥
आगच्छदुत्सवो भाति यथैव न तथा गतः ।
हिमांशोरुदयः सायं चकास्ति न तथोषसि ॥ ८६ ॥
मनस्विनो न मान्यन्ते परतः प्राप्य जीवनम् ।
बलिभुग्भ्यो न काकेभ्यः स्पृहयन्ति हि कोकिलाः ॥ ८७ ॥

संतोषक्षतये पुंसामाकस्मिकधनागमः ।
सरसां सेतुभेदाय वर्षौघः सूचनस्थितः ॥ ८८ ॥
जीयते भूगतोऽप्यात्मा कालेनात्मापि स्वर्गतः ।
भवेत्स्मशानमुद्यानमुद्यानं च स्मशानभम् ॥ ८९ ॥
उच्चशेखरगं वस्तु शुभं स्यात्सुखकारणम् ।
उपशामयते बाधं यथैवामृतसंस्कृतम् ॥ ९० ॥
संतुष्यत्युत्तमः स्तुत्या धनेन महताधमः ।
प्रसीदन्ति जपैर्देवा बलिभिर्भूतविग्रहाः ॥ ९१ ॥
स्वजातीयविघाताय माहात्म्यं दृश्यते नृणाम् ।
श्येनो विहङ्गमानेव हिनस्ति न भुजङ्गमान् ॥ ९२ ॥
गुरुं प्रयोजनोद्देशादर्चयन्ति न भक्तितः ।
दुग्धदात्रीति गौर्गेहे पोष्यते न तु धर्मतः ॥ ९३ ॥
महतां तादृशं तेजो यत्र शाम्यन्त्यनौजसः ।
अस्तं यान्ति प्रकाशेन तारका हि विवस्वतः ॥ ९४ ॥
दाता दानस्यान्तरा स्यात्पृथिव्यां गेहे गेहे याचकानां समूहाः ।
चिन्तारत्नस्यास्ति सत्त्वे विवादो मार्गे मार्गे रेणवः सन्त्यसंख्याः ॥ ९५ ॥
चारुता अपवशेन पदार्थे धैर्येण तदनु वादिगुणत्वात्(?) ।
वेणुगो भवति मञ्जुरसो····यन्त्रगो हि सुखदः कृतशब्दः(?) ॥ ९६ ॥
नराः संस्कारार्हा जगति किल केचित्सुकृतिनः
समानायां जात्यामपि वयसि सत्यां परिचयः ।
अयं दृष्टान्तोऽत्र स्फुटकरणतोऽप्यभ्यसनतः
शुकः श्लोकान्वक्तुं प्रभवति न काकः कचिदपि ॥ ९७ ॥
धनमपि परदत्तं दुःखमौचित्यभाजां
भवति हृदि तदेवानन्दकारीतरेषाम् ।
मलयजरसबिन्दुर्बाधते न प्रसन्नं
नयति च रसवाहादेवमत्यन्तमत्र ॥ ९८ ॥

कालक्रमेण परिणामवशादनर्घ्या
भावा भवन्ति खलु पूर्वमतीव तुच्छाः ।
मुक्तामणिर्जलदतोयकणोऽप्यणीया-
न्संपद्यते च चिरकीचकरन्ध्रमध्ये ॥ ९९ ॥
इयं कुसुमदेवेन कविनैकेन निर्मिता ।
दृष्टान्तकलिका नाम जृम्भतां कविमानसे ॥ १०० ॥

इति श्रीकुसुमदेवविरचित दृष्टान्तकलिकाशतक समाप्तम् ।

---

## श्रीकामराजदीक्षितविरचिता
## शृङ्गारकलिकात्रिशती ।

लक्ष्मीविह्वलविलासावलोकितानन्दितस्वान्तः ।
पश्यति गुरौ विधातरि लज्जानतकन्धरो हरिर्जयति ॥ १ ॥
प्रतिपादयति समुद्रे लक्ष्मीमन्तःपटे धृते गुरुबुधाभ्याम् ।
तद्वदनदर्शनोत्कः प्रपदालम्बी हरिर्जयति ॥ २ ॥
देवः स पातु दितिजनिनायकनिधनैधिताधिकक्रोधः ।
लक्ष्मीवदनसुधाकरदर्शनसंजातसौम्यसद्भावः ॥ ३ ॥
योगान्तरं न योगे सत्येकस्मिन्भवति शशिशीर्षे ।
कृतपद्मासनरचने जयति(तरां) स्वब्धचरणार्यो(?) ॥ ४ ॥
नाभीकमलनिवासश्चतुर्मुखश्चिन्तया मुग्धः ।
पुरुषायिते रमायाः संमीलितलोचनो विधिर्जयति ॥ ५ ॥
क्षीराम्बुधौ मुकुन्दं स्थितं समालोक्य शेषशय्यायाम् ।
तद्दक्षिणाक्षिमीलनलसत्करा सा जयति लक्ष्मीः ॥ ६ ॥
लक्ष्मीपाणिच्छले दक्षिणनयने मुरारातेः ।
आनन्दितः कुटुम्बी जयति विधिर्नाभिवास्तव्यः ॥ ७ ॥

---

१. श्रीकामराजदीक्षितोऽयमक्षरगुम्फपर्यायचिन्तामणेः कर्तुः श्रीरामराजदीक्षितस्य पुत्र आसीत् । कामराजदीक्षितकृतौ द्वावेव ग्रन्थावुपलभ्येते (१) शृङ्गारकलिकात्रिशतीनामको मुक्तकग्रन्थः, (२) काव्येन्दुप्रकाशाख्योऽलंकारग्रन्थश्चेति.

लक्ष्मीमुखमालोकति भगवति सेर्ष्या वचोदेवी ।
ननु वदनान्निजवीणाक्वणनमिषाज्जयति हुंकृतिं ददती ॥ ८ ॥
वाल्मीकप्रभृतीनां चरणयुगं संततं हृदि भजामि ।
यद्वशतः पदबन्धे सामर्थ्यं जायतेऽस्मदादीनाम् ॥ ९ ॥
हृदि भावयामि सततं तातं श्रीसामराजमहम् ।
यत्कृतमक्षरगुम्फं कवयः कण्ठेषु हारमिव दधते ॥ १० ॥
संपादितसुरसार्थव्यञ्जनपदबन्धदृष्टसद्भावम् ।
वाचस्पतिमिव काव्यं विबुधाः पश्यन्तु विनयमुखाः ॥ ११ ॥
उद्धृतदोषा सगुणा मुक्तैकावलिमुखैरलंकारैः ।
सरसा सुवृत्तवर्णा कविता वनितेव मानसं हरति ॥ १२ ॥
सुजनः करोतु हृदये कृतिमेतां ब्राह्मणो यथा वेदम् ।
यदि दुर्जनोऽन्त्यज इव त्यजति तदा कैव हानिरस्माकम् ॥ १३ ॥
मुग्धामिव युवलोकाः सरसां शृङ्गारकलिकाख्याम् ।
कमलकलिकामिवालय एनां रसयन्तु रसिकजनाः ॥ १४ ॥
श्रीसामराजजन्मा तनुते श्रीकामराजकविः ।
मुक्तककाव्यं विदुषां प्रीत्यै शृङ्गारकलिकाख्यम् ॥ १५ ॥
असमशरबाणवेधव्यथिताङ्गी मीननयना सा ।
स्मृतदयितसंगमसुखश्लथनीवी जीवितं धत्ते ॥ १६ ॥
अपयास्यति पञ्चशरः षष्ठेऽहनि किं करिष्यति ममायम् ।
इत्यालम्बितधैर्या मर्यादां नातिचक्राम ॥ १७ ॥
अवधिं विधाय तरसा दिनपञ्चकमञ्चितं सुभ्रूः ।
पिकनिकरश्रुतपञ्चमशब्दा पञ्चत्वमापेदे ॥ १८ ॥
अक्षद्यूते विरचितसुरतपणे प्रेयसि प्रसभम् ।
आलोक्य सखीवदनं साचिमुखी प्राहसद्बाला ॥ १९ ॥

---

१. कामराजदीक्षितसुतेन व्रजराजदीक्षितेन रचिता, (१) रसिकरञ्जनम्, (२) वल्लभाख्या नाटिका, (३) शृङ्गारशतकम्, (४) षड्ऋतुवर्णनं चेति ग्रन्थचतुष्टयी प्राप्तेति (Theodor Aufrechts Catalogus catalogorum).

अतिकठिनं कृष्णमुखं स्तनयुगलं भाति जलजाक्ष्याः।
शृङ्गारपूर्णकलशद्वयमिव मदनस्य मुद्राङ्कम् ॥ २० ॥
अतिशयितप्रीतिविजुपोरकलितचिबुकं नताधरं यूनोः।
श्रुतशब्दमात्रमद्दत्ताधररागं चुम्बनं जयति ॥ २१ ॥
अवतार्य भूषणचयं यावत्स्नातुं समेति हरिणाक्षी।
तावच्छ्रुतवति मयि सा पुनर्दधौ नासिकाभरणम् ॥ २२ ॥
आगामिनि बुधवारे भविता सखि मङ्गलो वारः।
श्रुत्वा चकितेऽन्यजने स्वयमादित सा कदम्बसौभाग्यम् ॥ २३ ॥
आश्लेषलालसे सति दयिते बाहू रसात्प्रसारयति।
नैजाङ्गुलित्रयमियं नतानना दर्शयामास ॥ २४ ॥
इयदेव मानिनीनां संमाननमानसानने भाति।
यद्धूलिधूसरालककलिका एष ते प्रियः पुरतः ॥ २५ ॥
इङ्गितमेव मनोगतमस्याः स्फुटमातनोत्यभिप्रायम्।
यदनिशमेषा बाला वातायनसंश्रिता भवति ॥ २६ ॥
ईप्सितमस्याः कः किल वेद यदेपालिमध्येऽध्वम्।
रोपकषायितसालसनयना सहसा स्थिरीभूता ॥ २७ ॥
ईदृशमेव तवेदं रूपं द्रष्टुं मदीयनयनयुगम्।
धृतजन्म जन्मभाजां नवं नवं प्रीतिमावहति ॥ २८ ॥
ईश्वर एव जगत्यां शृङ्गाररसीयसारवेत्तास्ति।
यः सर्वदार्धनारीभूतशरीरो वियोगभीत्येव ॥ २९ ॥
उद्गतकुचां नवोढां वीक्ष्य तथा परिचनारार्या।
भर्तुः प्रसादमनिशं प्राप यथा सा प्रियामार्धम् ॥ ३० ॥
उत्तमितकर्णयुगलं किमु धावसि गानलोभेन।
गन्धवहपूरितान्तरकीचकशब्दोऽयमुच्छ्वसति ॥ ३१ ॥
उद्भिन्नस्तनमुकुलां प्रविवेदिवधूं विलोक्य युवा।
क्रीडति जम्बीरयुगं निजमधरं दशति साकूतम् ॥ ३२ ॥

ऊर्ध्वज्ञुस्थितमर्धासनोपविनिवेशितैककरम् ।
ऊर्ध्वमुखमूर्धितैकस्तनमस्या लीलया हृषत्क्षेपः ॥ ३३ ॥
ऋद्धिं परस्य वीक्ष्य प्रतिवेश्मा मोदमावहति ।
सत्यपि विभवे गृहिणी भूषासु मनो न संधत्ते ॥ ३४ ॥
ऋजुरबला पतिमूचे मन्मातृगृहादयं प्राप्तः ।
उपचार्यतामितीत्थं गोपायत्यसमयागतं जारम् ॥ ३५ ॥
ऋक्षाणि मौक्तिकानि प्रसारितान्यङ्गणे नभसि ।
चन्द्रेण रागिणा किं पूर्वाशावारवनितायाः ॥ ३६ ॥
ऋक्षं जनभयवशतो विज्ञाय सकम्बलं जारम् ।
परिषस्वजे कृशाङ्गी रुदतीमथ जहास हलिकजनः ॥ ३७ ॥
ऋतुमभिगम्य वसन्ते पालाशं दरविकासकुसुमाग्रम् ।
दर्शयति सस्मितास्या निभृतं कौमारजाराय ॥ ३८ ॥
एतावदेव गुरुजनसमक्षमिन्दीवराक्षी सा ।
निजगाद ग्रहणस्य स्नानं गृह एव दुःखिता तनयाम् ॥ ३९ ॥
एरण्डवीथिकान्तर्जारं गतमीक्ष्य हलिककन्या ।
तृणकर्तनत्वरामिपरङ्गिवने सा तदायासीत् ॥ ४० ॥
एतावतालमित्थं निगदन्तीं खिन्नसर्वाङ्गी ।
अवनतमुखी दिनान्ते सखीजनं हासयति सुभ्रूः ॥ ४१ ॥
एतदिदं तत्कुसुमं गृहाण वरवर्णिनीत्युक्त्वा ।
यूना मिषेण नीता रभसात्कुञ्जोदरं सुतनुः ॥ ४२ ॥
एकक्रमात्प्रवृत्ता दूषणगणनाय तत्र सुभग सुभ्रूः ।
मयि मौनमञ्चति द्राग्गणनाभ्रंशे सलज्जहासाभूत् ॥ ४३ ॥
ऐक्षवरसं हि मधुरं वदन्ति केचित्परेऽमृतं तु परम् ।
अर्हति न षोडशीमपि कलामचाप्तं प्रियाधरसुधायाः ॥ ४४
ऐन्दवमुदेतु बिम्बं निवृत्य यास्यामि नैजगृहम् ।
घनतरतमालवीथीपथेन संकेतमुपयामि ॥ ४५ ॥

ओमिति यत्प्रियदूतीं जगाद नतकन्धरं कुरङ्गाक्षी ।
प्रणवः स शीलखण्डननिगमारम्भस्य संकथितः ॥ ४६ ॥
ओंकारः स्मरकेलेः स्वाहाकारो वियोगदुःखानाम् ।
उपगूहनहुंकारस्तस्याः करकङ्कणक्वाणः ॥ ४७ ॥
ओकसि पिपीलिकाभिः कृते वसत्यहिपतिः शीघ्रम् ।
किमसंभाव्यमुष्मिञ्जिह्मगतौ च द्विजिह्वे च ॥ ४८ ॥
औपम्यरहितमेतद्वदनं कथमिन्दुसदृशमद्याभूत् ।
इत्यालप्य मृगाक्षी साक्षीभूतं निनिन्द कन्दर्पम् ॥ ४९ ॥
औत्सुक्यादुच्चलितं मानेन पुनः स्थिरीकृतं हृदयम् ।
प्रियसदनं प्रति गन्तुं स्थातुं दोलायितं तस्याः ॥ ५० ॥
औदनमन्यत्रैकं चषकं परिवेषयन्ती सा ।
प्राघुणिकस्य तु पात्रे विहसन्ती द्वितयमर्पयामास ॥ ५१ ॥
अञ्जनमलिनाधरपुटमवेक्ष्य दयितं कुरङ्गाक्षी ।
रोषकषायितनयना तत्संमुखमादधे मुकुरम् ॥ ५२ ॥
अङ्के निवेश्य करकृतं चषकं चुबुक उन्नते तस्याः ।
आकारयति गुरुजनमपि तत्र च हुंकृतिः समं जयति ॥ ५३ ॥
अम्बरमद्भुतमीदृशमेकं मम दीयतां सुभगे ।
श्रुत्वेति स्तब्धतनुः स पुनः कार्ये विसस्मार ॥ ५४ ॥
अन्तः प्रेमलचित्तां मुग्धामनुकूलयति मयि रसेन ।
श्रवणोत्पलसंसर्गी जातो मधुकृन्निर्घोषः ॥ ५५ ॥
अः कमलजाकराब्जस्पर्शसमुद्भूतमनसिजो जयति ।
रत्युत्कण्ठाजागरविकसितनाभीसरोजन्मा ॥ ५६ ॥
कलिका मधुकरपङ्क्तिं मदयत्यन्तस्थसौरभापि मालत्याः ।
रत्युत्सुकयोः राजनयूनोः सन्निधिर्धरा स्फुटीभवति ॥ ५७ ॥
कामप्रेतापेतमनाः स खलु श्मशानवासाग्रः ।
अर्धाङ्गे धृतदारो वन्दितचन्द्र स्मरारिरपि ॥ ५८ ॥

कियदभिगोपयसि त्वं कितव परप्रणयिनीप्राण ।
कस्तूरिकापरिमलः कथमथ शक्यो वरीतुमयम् ॥ ५९ ॥
कीर्तनसमये शौरेर्वन्दत्सु जनेषु हरिदासम् ।
न चलति पदात्पदमपि पतिता तत्पादयोरार्या ॥ ६० ॥
कुतुकं विलोकयिष्ये मिषतो दधिविक्रयस्याहम् ।
संभ्रमविस्मृतकञ्चुकपरिधाना पुलककञ्चुकीं दधे ॥ ६१ ॥
कूर्पासकमाश्लेषे कार्श्री नीवीविमोक्षे च ।
याचितवती नयनयोश्चुम्बनसमये विमुग्धाभूत् ॥ ६२ ॥
केतकरजसा व्याप्तममवधूनोः कपोलतलम् ।
पाण्डुरितमाननमभूचित्रं नलिनाभनयनायाः ॥ ६३ ॥
कैदारिकेऽत्र मार्गः किं वामे दक्षिणेऽथवेत्युक्ते ।
निकटोपवनाध्वानं प्रदर्श्य सा नम्रितास्यासीत् ॥ ६४ ॥
कोपकषायितनयना नैयनाञ्चलसस्क्रशानुमे ।
पादपतितेऽपि नीवीमाकर्षति सस्मिता सखीमैक्षत् ॥ ६५ ॥
कौतुकदर्शनलालसचित्तेन स्वगृहरक्षणे गुरुजनेन ।
विनियुक्तापि मृगाक्षी पुलकितवपुरास सा नितराम् ॥ ६६ ॥
कंदर्पाकुलचित्ता गुरुजनपुरतो नवोढा सा ।
लज्जामन्थरतारकमालोक्य पतिं निशश्वास ॥ ६७ ॥
कः किल कथयः कुतुकं नागेशतल्पितो येन ।
तल्पीकृतोऽद्य सोऽपि व्रजनार्या मल्लिकाकुञ्जे ॥ ६८ ॥
खर्जूरीरानयितुं नियोजिता बत मतैकाहम् ।
आरोहणावरोहणसमये मम खण्डितो देहः ॥ ६९ ॥
खाण्डवमधुरिमलुब्धो भाण्डपतद्धारयानुलिप्ताङ्गः ।
मार्जनमिषेण लग्ना धिक्कार्या सा विभीषयति लोकम् ॥ ७० ॥
खिद्यतु मां गुरुलोकः कथमेनां वार्षिकीं यात्राम् ।
त्यक्तुं समुत्सहेऽहं यत्र स्त्रीपुंससंमर्दः ॥ ७१ ॥

१. 'नयनान्तकृशानुनानुमे' इति युक्तं प्रतिभाति.

खुरघातदलितपृथ्वीरजोभिरमितोऽम्बरे व्याप्ते ।
पशुभिः सार्यं यूनोः कयोश्चिदालिङ्गनं जयति ॥ ७२ ॥
खेदाय मे भवति तद्रोपायसि यदम्बुजाक्षि महिमानम् ।
यावकपदाङ्किता ते कथयति भालस्थली सुकृतम् ॥ ७३ ॥
खञ्जननयने मानं मुञ्च बधान प्रिये प्रीतिम् ।
मास्तैव विजयदशमी यास्यन्ति न वासरा याताः ॥ ७४ ॥
गजमदसुगन्धिशालागलितरुमालोक्य मगे व्याधी ।
पर्यचरत्पतिमधिकं गुञ्जाभूषाकुरूपमपि ॥ ७५ ॥
गायत्रीजपपूतं मम मुखमुच्छिष्टमातेने ।
प्रातरिति वदति दयिते हसत्सु लोकेषु नम्रितास्याभूत् ॥ ७६ ॥
गिरिकन्याशंकरयोस्तस्मै प्रेम्णे नमस्कुर्मः ।
यत्र कटाक्षक्षेपे जयति समं नित्यमभिलाषः ॥ ७७ ॥
गीष्पतिदारविहारी चन्द्रः स कलङ्कतामाप्तः ।
*स पितामहः स्वकन्यागामी तत्सत्य आभाणः* ॥ ७८ ॥
गुणपूर्णे किं मानैर्वर्षाः प्रतियान्तु घर्मसमयेऽपि ।
सुरभिः शरच्च शिशिरो हेमन्तो जायतां नित्यम् ॥ ७९ ॥
गूढव्यञ्जद्विनयप्रवृत्तमदनगुलिकाकृतिस्तन्व्या ।
यदि मोहिता युवानः पूर्णकुचाग्रे तु[१] किं कर्ता ॥ ८० ॥
गेहक्रियासु गुरुजननियोजिता संभ्रमत्वरिता ।
वसनाञ्चलसंवरणव्याजेनादर्शयत्स्वाङ्गम् ॥ ८१ ॥
गैरिकमण्डितगण्डः सखि यातु करी विधेहि दयाम् ।
विरचितपत्रावलिकुचे पुरतो मा याहि मा याहि ॥ ८२ ॥
गोपस्त्रियः प्रदर्श्य स्तनयुगलं तन्तुजालहृतकञ्चुकयाः ।
कन्दुकमिममर्पय मे हरिणेत्युक्ते जहास नन्दवधूः ॥ ८३ ॥
गौरववशतो बालामधिकतरं पर्यचरदार्या ।
उद्भिन्नरोमलतिकाफलायितस्तनमुकुलयुग्माम् ॥ ८४ ॥

१. 'कृतो रान्ध्याः' इति मुद्रकम्. २. का याता.

गङ्गातरङ्गशीतलपवनस्पर्शेन भिन्नगात्राहम् ।
कथमुपयामि नमस्यापुष्पाहरणाय गुरुजननियुक्ता ॥ ८५ ॥
गः कार्तिकेयशङ्कातङ्कितहृदयोऽङ्कमारूढः ।
स्ववदनशुण्डादण्डाकलितशिवास्तनयुगो जयति ॥ ८६ ॥
घनतरघनाघनानामचिरद्युतिभीषिताखिलजनानाम् ।
आलोक्य यातृयुगलं सुखितैका दुःखितापरा चित्रम् ॥ ८७ ॥
घातुकमदनशराहतिजर्जरिताङ्गी विचेतनापि वधूः ।
आलीमुखनिसृतप्रियनामश्रवणेन सोज्जीवा ॥ ८८ ॥
घुर्घुरति वेत्रवत्यास्तीरोपवनेषु मण्डलकः ।
सखि वद कथमुपयास्ये सलिलाय नियोजयत्यार्या ॥ ८९ ॥
घूर्णितनयनो मधुना कुलाङ्गनाशीलखण्डनोद्युक्तः ।
आलिङ्गति पर्यङ्कस्थितमार्जारीं तदीयनखदूनोऽपि ॥ ९० ॥
घोषं नवजलदानां श्रुत्वा विरहाकुला तन्वी ।
निश्वासच्छलतो ननु पवनार्घं तत्र निक्षिपति ॥ ९१ ॥
घण्टाघोषं श्रुत्वा शिवगानश्रवणभक्तिमती ।
पतितं स्तनांशुकमपि न वेद तत्संमुखस्थापि ॥ ९२ ॥
ङाराधनाभिसक्ता प्रतिदिनमेकाकिनी यान्ती ।
आर्याधिसायमनिशं खिन्नशरीरा समायाति ॥ ९३ ॥
चरणानतदयितशिरःशिरोरुहग्रथितमञ्जीरा ।
लघु मोचयन्त्यवनता गतमाना लक्षिता सहचरीभिः ॥ ९४ ॥
चामीकराङ्गकान्तिः कृतान्धकाराभिसारवेषापि ।
संस्मृतदयितसमागमजातस्तम्भा जनैर्ज्ञाता ॥ ९५ ॥
चिरपरदेशनिवृत्ते दयिते विरहातुरा तन्वी ।
उपसि स्मृतताम्बूला जहास चाहासयत्तमपि ॥ ९६ ॥
चीनार्द्रचीवरपरिष्वक्तविभक्ताखिलावयवा ।
रसमशेष नताङ्गी नाङ्गीकुरुते मनः कस्य ॥ ९७ ॥

१. 'विस्मृतवति' इति साधु.

चुम्बनमसकृद्भ्रूनोर्गवाक्षनिर्विष्टवक्त्रयोर्जयति ।
प्रविवेशितः प्ररूढे प्रेमलतायाः प्रसूनमिव ॥ ९८ ॥
चूर्णछुप्टरसज्ञः पद्माक्ष्याः प्रथमवीटिकादाने ।
उपहस्यते प्रभाते वचने वचने प्रजावत्या ॥ ९९ ॥
चेतश्चञ्चलभावं मुञ्च वधानान्तरे धैर्यम् ।
पिकरवमन्मथडिण्डीघोषकरो याति मधुसमयः ॥ १०० ॥
रसिकानन्दनिकायां श्रीमत्कविकामराजरचितायाम् ।
इति शतकं परिपूर्णं प्रथमं शृङ्गारकलिकायाम् ॥ १ ॥

द्वितीय शतकम् ।

मोक्तुं प्रतीक्षते त्वां द्विपास्य पञ्चाननः सदने ।
श्रुत्वा धात्रीवचनं पलायितो गणपतिर्जयति ॥ १ ॥
चैत्रे विगलितपत्रे कुञ्जे परिलम्बबहुगुञ्जे ।
आलीषु गण्डपालीलीना पुलकेषु मीनाक्ष्याः ॥ २ ॥
चोरमुपागतमीक्ष्य ध्वान्ते शिक्षेप भीषयितुमेषा ।
सोऽपि तदानन्दवशाच्चौर्यं कर्तुं विसस्मार ॥ ३ ॥
चौहारपीठनिलयो धूर्तस्तपसि स्थितः कश्चित् ।
साकूतमानतमुखं सह समरोदीदरोदयत्कांचित् ॥ ४ ॥
चन्दनपङ्कजलार्द्रा वक्षसि निहिता जलार्द्रापि ।
शुष्यति तत्क्षणमस्याः किं कुर्मः कं प्रति ब्रूमः ॥ ५ ॥
चः खलु शीतप्रकृतिर्जगति स्थितिरीदृशी प्रथिता ।
कथमिव मयि तिग्मतरो अमत्यहो पद्मिनीनाम्ना ॥ ६ ॥
छत्रमिव ग्रामस्य प्ररोहनिभृतो व्यलोकि वटः ।
श्रुत्वेति वधूवचनं बभूव मलिनानना श्वश्रूः ॥ ७ ॥
छायागर्यमकरिणोचानितकमठस्य सखि पश्य ।
कोकमिथुनं निषीदति तपति सरे तारमयूखेऽस्मिन् ॥ ८ ॥

१. प्रविवेश तत्प्ररूढम्' इति पुस्तम्

छिद्रवति वंशिके त्वं मधुरिपुमधुरामृतैस्तृप्ते ।
गायसि मधुरस्वरं यत्कस्य न विदितासि लोकेऽस्मिन् ॥ ९ ॥
छुरितं लीलामिपतः प्रियस्य पैष्टातकं रजोऽक्षियुगे ।
अभिनवरतविवशाङ्ग्या श्लथनीवीबन्धया सुदृशा ॥ १० ॥
छेकमुखोद्गतसुश्रुतसमागतश्लोकसन्ततिस्तन्वी ।
पुरुषायिते कथमिति प्रश्नेनापाहरद्दयितशङ्काम् ॥ ११ ॥
छन्दः मपठति दयिते चतुष्पदीरूपमम्बुजाक्षी तम् ।
सहसितमवदन्मर्त्यैः कथमिव सक्तश्चतुष्पथाम् ॥ १२ ॥
जगति जयन्ति न रामाः कति वा प्रियदीयमानमणिभूषाः ।
मम तु मणिभूषणानामङ्गस्पर्शो स हतिनैव ॥ १३ ॥
जारं गुर्जरगृहिणी विलोक्य कीटाभिदंशनच्छलतः ।
मकटमकरोन्निजोरुद्वितयं सिचयं समास्फाल्य ॥ १४ ॥
जितमद्य मया दयित त्वदीयसौहार्दसंगत्या ।
धारयसि देहशोभां न विना मम दर्शनं काञ्चित् ॥ १५ ॥
जीवितमथ कथमिव सा दधातु भवता विना सुभग ।
आरायन्ते सुतनोर्वदने नयनोदबिन्दवः पतिताः ॥ १६ ॥
जुष्टं पवनैर्घुष्टं पिकालिभिर्वनमनोकहैः पुष्टम् ।
हृष्टं चित्तं क्लिष्टं पतता सूर्येण झिल्लिभिस्तुष्टम् ॥ १७ ॥
जूटीबन्धव्यापृतहरकरपरिकृष्टकेशायाः ।
किंचिन्मीलितनयनं सीत्कारो जयति गिरिजायाः ॥ १८ ॥
जेमनसमये लड्डुकयुगलं परिवेषयन्ती सा ।
स्वकरेणादायैकं मर्दयता समुपहसितेव ॥ १९ ॥
जैत्रं तव वपुरस्त्रं यूनां विजयाय कृतमनङ्गेन ।
स्त्रीणां मृद्वङ्गीनां जयाय कुसुमेषवो विधृताः ॥ २० ॥
जोषं तिष्ठ तवैषा व्यलोकि शोभा परैव मया ।
निर्वर्तितेऽक्षिणी मे मा श्रुत्योर्निर्वृतिं धेहि ॥ २१ ॥

जङ्घाकरिकः प्रतिहृतदयितोऽप्यन्तः कृतार्थतामगमत् ।
उत्सुकसत्वरवनितास्खलितांशुकदृष्टवक्षोजः ॥ २२ ॥
झडिति समुपागतास्ते क्रीडनमपसार्य त्वरितम् ।
उक्त्वेत्यसंवृततनुर्जगाम शिबिरं दुनोति तच्चेतः ॥ २३ ॥
झाङ्कारितनिजपक्षः पक्षी परितः परिभ्रमति ।
अधिपल्वलमितरे पुनरम्भः पास्यन्ति पक्षिणस्तु कथम् ॥ २४ ॥
झिल्लीझांकृतिमुखरे भिल्लीवेषा निशावदने ।
पल्लीपतेस्तनूजा मल्लीकुञ्जं गवेषयति ॥ २५ ॥
झुणुझुणितचरणकिङ्किणिजालं बालं समादाय ।
चुम्बति दयिते प्रेम्णा सखीं विलोक्याहसल्ललना ॥ २६ ॥
झेंगडथोंततधिकटमुरजध्वनिनादिते भुवने ।
लोके कुतुकविलोकिनि सरागमालोकनं जयति सूनोः ॥ २७ ॥
झञ्झापवनोद्धूतासारविशीर्णाम्बुकणलेशाः ।
सीत्कुर्वन्ति तदीयेष्वङ्गेषु मनोजतप्तेषु ॥ २८ ॥
टिट्टिभफलकल्पमधिकं श्रुत्वा गुरुयन्त्रिता भवनकृत्ये ।
प्रददौ तक्रं सुतनुः पायसकरणाय याचिता दुग्धम् ॥ २९ ॥
टीकत एव तडागं प्रान्ते कोयष्टिकस्तरुणः ।
संभावयति पुनस्तां चटुना कोयष्टिकी न किंचिदपि ॥ ३० ॥
टंकारः स्मरधनुषः फट्कारः शगदमादीनाम् ।
जयकारश्चित्तजनैर्भणितं जयति धपावल्याः ॥ ३१ ॥
टणिति यदैव वरोरोर्मया श्रुतो नूपुरस्य रवः ।
अवलोकितगुरुलोकः कांचिदवस्थामहं प्राप्तः ॥ ३२ ॥
टंकृतिमभिसंश्रुत्य क्षीवाक्षी सा क्षपान्तघटिकायाः ।
नीलमणिवासगृहगा कथयति दयिताय मध्यरात्रमिति ॥ ३३ ॥
टमरुडमत्कारचमत्कृतं गणेशं विलोक्य चन्द्रमौलिम् ।
दोलितशुण्डादण्डं जयन्त्युमाप्रेमहसितानि ॥ ३४ ॥

डाक्कृतिभीषितलोके प्रेतैः पितृकानने ह्यस्मिन् ।
नरमांसविक्रयागतपुंसो धैर्यं विलोकयत ॥ ३५ ॥
डिण्डिमघोषः समभूत्गनस्विनीमानमङ्गाय ।
निशि रतवशयुवतीजनकाञ्चीकलकिङ्किणीकाणः ॥ ३६ ॥
डुलिगम्बुभङ्गिलोलां संस्थानविशेषशालिनीं वीक्ष्य ।
अवहत्पलाण्डुखण्डप्रपाण्डुरां गण्डमण्डलीं सुतनुः ॥ ३७ ॥
डैण्डिमशब्दश्रवणस्तनितश्रमभङ्गुरान्तरा तन्वी ।
चक्रे सखीर्निराशा राशा वदनावलोकनोत्तरला ॥ ३८ ॥
डोवीप्रभृतिरूपकविविधप्रतिरूपकाणि दृष्टानि ।
प्रतिरूपकं मयाद्य व्यलोकि लोकेऽद्भुतं सुभग ॥ ३९ ॥
डौडुभशिशुं चरन्तं मृतशफरीविवृतवदनान्तः ।
दर्शयति प्रतिवेलं खेलन्ती दयितमम्बुनि हसन्ती ॥ ४० ॥
ढकारव इव रतिपतिविजयप्रास्थानिको जयति ।
प्रत्यूषे शतपत्रप्रसूनपङ्क्तिस्फुटोन्नादः ॥ ४१ ॥
ढुण्ढोत्सवे सुकेशी प्रियहृदि पैष्टातकं मुष्टिम् ।
अनुरागमान्तरस्थं प्रीत्येव समर्पयामास ॥ ४२ ॥
ढौकितवती स्तनाभ्यां देहावकाशं ममापसर परतः ।
निगदन्तीत्यं दयितं मनस्विनी रात्रिपर्यन्ते ॥ ४३ ॥
तस्याः स्मरामि सारीद्यूतपणे निजपराजयैकफले ।
पुरुषायिते श्रमाम्भःपरिचितमुत्कम्पितोरुवपुः ॥ ४४ ॥
तारुण्यगुणगरिष्ठे निन्दति नाथे पराङ्गनासक्तम् ।
तारापतिं मदर्शयानतानना कमलनयनासीत् ॥ ४५ ॥
तिमिराभिसारिका सा नासापयनाहृतालिकुला ।
कैर्न विदिता वराङ्गी साङ्गीकृतमन्मथा विपिने ॥ ४६ ॥
तीरस्थितैणशावकनयना प्रतिबिम्बमम्बुनि प्रेक्ष्य ।
निकटनिषण्णः कश्चित्पुलकितगात्रो जहार नतवदनः ॥ ४७ ॥

तुलयन्त्यां वणिजोऽम्बुजनयनायां पण्यवस्तूनि ।
त्वरितागतोऽपि चित्रं पण्यग्रहणं विसस्मार ॥ ४८ ॥
तूलपटीमपहाय स्वपिति सहस्येऽप्यनावृतशरीरः ।
अवलोकितनिजदयितानन्दपटानन्दितस्वान्तः ॥ ४९ ॥
ते पत्रिका प्रदिष्टा प्रियये त्युक्त्वा निवेदिता पुंसाम् ।
श्रीकारमात्रहसितामवलोक्य चिरं निशश्वास ॥ ५० ॥
तैलङ्गचामनुरक्तस्त्वरितस्तन्वीविलोचनेषु वृथा ।
तां निन्दतिस्म विहसन्विहसन्ती सा तमालिलिङ्ग भृशम् ॥ ५१ ॥
तोषपरिफुल्लनयना पुलकितकुचमण्डला बभूव वधूः ।
यात्रायै गुरुलोके गच्छति गृहरक्षणे निवेश्यैनाम् ॥ ५२ ॥
तौर्यत्रिकावलोके वलभीवातायनान्तस्था ।
सतनुमतनुं विदधती स्वतनुं सतनुं ततान सा सुतनुः ॥ ५३ ॥
तन्त्रीजित्वरकण्ठी कण्ठीरवमध्यमा रामा ।
रामारामविहारे हरेण मनो न कस्य संहरति ॥ ५४ ॥
दलितकमलावलीनां परिमलमनिलाहृतं समाघ्राय ।
शीतातुरा तु तरुणी सविधे भर्तुर्निशश्वास ॥ ५५ ॥
दाहहताखिलगात्री त्रीनपि दिवसान्कथं जीवेत् ।
वेतण्डतुण्डसेवां वारं वारं कुरुष्वमविषादा ॥ ५६ ॥
दिवसे दिवसे पीनं कुचयुगमानीलवदनमेणाक्ष्याः ।
आलोक्य तुष्यति पतिः कर्णाभ्यर्णावतीर्णपलितश्रीः ॥ ५७ ॥
दीप्ते दीप्तैः किरणैश्चण्डमरीचेर्जगति सखि चित्रम् ।
पाथः प्रयाति हित्वा वापीशैवालवल्लरी ललिता ॥ ५८ ॥
दुःसहतरं वदन्ती सखीजने निजविरहजं दुःखम् ।
श्रुत्वा प्रियस्य शब्दं द्वारि कृशाङ्गी समुदतिष्ठत् ॥ ५९ ॥
दूरतरदेशगमनोद्युक्तं दयितं जगाद हरिणाक्षी ।
सायं यास्यति सदनं श्रुत्वेति स संनिवृत्तोऽभूत् ॥ ६० ॥

दैवरकरकमलेरितशृङ्गच्युतसलिलधारया सेकः ।
उद्गतपुलकविनिह्नवसाहाय्यं व्यतनुतारविन्दाक्ष्याः ॥ ६१ ॥
दैवमुपालभमाना जिगमिषति प्रियतमे गुरुजनोत्तया ।
धृतसितवसना वसने यावकमभिपातयामास ॥ ६२ ॥
दोःपल्लवद्वयेन च्छादयति प्रियतमे प्रियानयने ।
पृच्छन्ती केति सखीमुत्तरयामास पुलकैः सा ॥ ६३ ॥
दौर्वाससमिव शापं शकुन्तला दयितसंगमे प्राप ।
बाला गुरुजनयन्त्रणमकृतरजोदृष्टिशान्तिविधिः ॥ ६४ ॥
द्वंद्वं मुहुर्वदन्ती निवेश्य वृद्धं पतिं सदने ।
पुलकितगात्री यवनी प्रययौ प्रतिवेशिना सह मदारम् ॥ ६५ ॥
धनुषा कुसुममयेन स्मरस्त्रिलोकीं विजेतुमसमर्थः ।
बाले कलयति भवतीं स स्तनगुलिकां धनुर्वल्लीम् ॥ ६६ ॥
धात्रे पिकाभिशिक्षितमक्षरयुगलं वदति बाले ।
बाले गुरुजनपुरतस्तव पतिमालोक्य हसिताहम् ॥ ६७ ॥
धिग्मां चञ्चलहृदयामित्यात्मानं निनिन्द मदिराक्षी ।
आलोक्य मधुपरहितं कुञ्जं कुसुमाकरे काले ॥ ६८ ॥
धीरा विलासरभसा तस्याः प्रतिवेशिभिरकारि ।
सापि तथैवास सदा नमः सतीधर्मदैवाय ॥ ६९ ॥
धुन्वन्त्यां निजवसनं धूलीभिर्धूसरं तन्व्याम् ।
प्राप्तं मम लोलाभ्यां जनुषः साफल्यमक्षिभ्याम् ॥ ७० ॥
धूसरितं धूलीभिः शरीरमेतत्क्षतं च गोक्षुरकैः ।
भस्म वलयाली मे तदपि विधेयो नियोग आर्यायाः ॥ ७१ ॥
धेनूनां धेनुभ्यः पुरोधसे शतमदान्न धेनूनाम् ।
सारं मासारम्भा सुरकरमस्याः स पश्यति स सारम्भः ॥ ७२ ॥
धैर्येण सखीवचनात्कृतमाना सा निनाय निशाम् ।
श्रुत्वाथ कुक्कुटरुतं प्रतिबोध्यालिङ्गितवती माम् ॥ ७३ ॥

धोरणिरलकालीनां तस्याः प्रियनिर्वृतिं चकारादौ ।
तदनु विलोकनमुच्चैस्तदनु कथा तदनु रतिविलासः ॥ ७४ ॥
धौताञ्जनाश्रुवदने वद नेयासौ त्वया कियती ।
रात्रिः शृणु चरणायुधकूजितशरणा समापतिता ॥ ७५ ॥
धंघनपरस्तपस्वी मुग्धामालोक्य लुलितमौलिः ।
कर्णेजपवत्कर्णे जपं (च)कारान्यलोकस्य ॥ ७६ ॥
नवरङ्गपिहितगात्री पात्रीभूता युधप्रीतेः ।
नयनानन्दविधात्री रात्रीरेताः करोतु मे सफलाः ॥ ७७ ॥
नावि जनैः पूर्णायामारोढुं योषितमशक्ताम् ।
आरोहितुं प्रवृत्तो लेभे नौग्राहिकस्तदाश्लेषम् ॥ ७८ ॥
निधिमिव जघनं तस्या रोमालीविहितं नवोढायाः ।
नाभीमुद्रामुद्रितमालोक्यानन्दितस्थितस्तूष्णीम् ॥ ७९ ॥
नीवीबन्धे नीवीं दयिते परिमोक्तुमसमर्थे ।
बाला जहास निभृतं तथा यथाहासयत्सखसखीः ॥ ८० ॥
नुन्नं प्रिययात्मानं पृथुना वक्षोरुहैकेण ।
यात्राजनसंमर्दनरथ्यावदने युवा कृतिनमिव मेने ॥ ८१ ॥
नूतनमानन्दपटं प्रथमं सदने जनैर्व्याप्ते ।
प्रकटयति गोपयत्यपि गोपवधूर्विपरिवर्तितोरुयुगा ॥ ८२ ॥
नेय इतोऽयं बालो रोदनशीलः कृतकृतरोषम् ।
आह स्म सखीर्बाला नतानना प्रियतमे चिरायाते ॥ ८३ ॥
नैशे तमसि मृगाक्षी लक्ष्यीकृत्य प्रियाभिसृतिम् ॥
चलिताधिदेहलि पदं दोलारूढं मुहुर्मुहुरकार्षीत् ॥ ८४ ॥
नोलङ्घयति गुरूणा वचनं प्रतिवासरं सदाग्रहा ।
द्राक्क्षताऽपि केतकसुमान्यानयति पूजायै ॥ ८५ ॥
नौ संगमो विधाना स्वप्नेऽप्यसदनो न संतनुते ।
उज्जागरतः समो भ्रदयनि हा दैवनउत्ता ॥ ८६ ॥

नन्दकुमारं यमुनातीरोपगतं विलोक्य कापि ययौ ।
कलशाकलनच्छलतः प्रकटितवक्षोजतटभुजामूला ॥ ८७ ॥
पतिमभिनववार्तागतमलोक्य मिषेण कीटदंशस्य ।
चैलाञ्चलमास्फाल्य प्रदीपनिर्वापणं चक्रे ॥ ८८ ॥
पादयुगप्रक्षालनसमयेऽस्मिन्राष्ट्र इत्युक्त्वा ।
रचिताधिकृतापत्या सुतनुस्तनुदक्षिणादाने ॥ ८९ ॥
पिच्छलतरेऽम्बुपातैः कथमुपयास्यामि वापिकातीरे ।
इति कृतकरोपवचना गुर्वाज्ञया ययौ मुदिता ॥ ९० ॥
पीवानमीक्ष्य तरुणं प्रत्यानयनेऽस्य रचितबहुयोगा ।
नतवदना स प्रातर्दैवे दोषं निवेशयति ॥ ९१ ॥
पुरतः पदं निधातुं सलिलान्तर्बिम्बवर्ती सुतनुम् ।
कृत्वा करे पुरोधाः संज्ञापयितुं चमच्चकारान्तः ॥ ९२ ॥
पूजितमानमति विभो(?)स्वामिनमङ्गनाजने भक्त्या ।
प्रत्युत्थापनसमये प्रति पदमासामसौ मुमुदे ॥ ९३ ॥
पेटीगृहीतुकामे दस्यौ भाते प्रतीक्षन्त्याम् ।
दयितायां मौनवतोस्तयोरभून्मन्मथो दूतः ॥ ९४ ॥
पैतृकविधिप्रवृत्तः करेण पिण्डं समादाय ।
साकूतहासमैक्षद्दयितावदनं युवा कश्चित् ॥ ९५ ॥
पोत्रिणि तटाकतीरे प्ररूढमुस्ताक्षतिप्रवणे ।
पार्श्वं सितालिमध्ये करजकुजस्य सौभाग्यम् ॥ ९६ ॥
पौगण्डयं व्यतीता पल्लीपतिकन्यकोद्याने ।
प्रतिवेशसारिणीजलमलापयन्नैजसारिण्याम् ॥ ९७ ॥
पण्डितवधूर्विचित्रं पराङ्गनारङ्गरञ्जितमनाः ।
भर्तरि दिवमुपयाते चितानलान्तः प्रजज्वाल ॥ ९८ ॥
फलितापि सखे खलिता द्राक्षालतिका मनो विनोदयति ।
परिपाकाधिकसरसा मतिपदपरिदृश्यमानबहुबन्धा ॥ ९९ ॥

फाणितपरिवेषणमिषवशतस्तरुणं वधूर्विलोकयति ।
सोऽप्यलमिति तां द्वावपि पूर्णं द्रोणं न जानीतः ॥ १०० ॥
रसिकानन्दनिकायां श्रीमत्कविकामराजरचितायाम् ।
शतकं द्वितीयमेतत्पूर्णं शृङ्गारकलिकायाम् ॥ १ ॥

---

तृतीय शतकम् ।

जयति स कामः कामं कमनीयतरः कलाकलितः ।
येन किल जन्मतः प्राग्भविष्यता मोहितौ पितरौ ॥ १ ॥
फुल्लमल्लीमल्लीवल्लीकुञ्जो निलीनालिः ।
आलोकितो मया किल बालो नालोचितो यशोदायाः ॥ २ ॥
फूत्कुर्वती प्रियस्य स्वहस्तसरोरुहरजःप्लुते नेत्रे ।
मिथ्यानिमीलिताक्ष्णा तूर्णं समचुम्बि मानिनी तेन ॥ ३ ॥
फेरुवदनानलशिखाप्रभाविभावितपथा निशीथिन्याम् ।
पञ्चशरैकसहायाभिसरति धन्यानुरागार्द्रा ॥ ४ ॥
फेरवशब्दं श्रुत्वाभिसारिकागमनदुन्दुभिध्वानम् ।
कृतकनिमीलितनयना पत्युर्नयने विलोकयति ॥ ५ ॥
बहुना किमिहोक्तेन प्रतियासि नैव नागरिकवनम् ।
कतिभिर्नवोपभोज्यं तत्र बलानागरिकयुगम् ॥ ६ ॥
बाहू प्रसार्य दयिते याचत्याश्लेषमादरतः ।
सरजसमरन्दतुन्दिलमम्भोजं दर्शयामास ॥ ७ ॥
बिम्बीफलेऽधरपदं कुर्वति देवे चकोराक्षी ।
अम्लानन्दिनकरयोः सहासलोकान्तरं सुचिरम् ॥ ८ ॥
बीजं कामः कन्दो जघनं नाभिस्तथा यानम् ।
कुचमुकुलमुकुलिताऽस्या रोमालीभूरुहो जयति ॥ ९ ॥
बुध एव सवितृसंनिधिवसतिरलक्षोदनिः मननम् ।
अप्राप्तोऽप्युदयं यः सुधानं सकलमस्य चिन्तयति ॥ १० ॥

बन्धयसि केशपाशं तथैव यूनां मनांसि नयनानि ।
चित्रायतस्य युक्तौ भवति न वा मुक्तिरेतेषाम् ॥ ११ ॥
भसितोद्धूलितदेहो दिगम्बरः कृत्तिमाञ्जटिलः ।
सोऽपि तिलतण्डुले यदि निरतः सकलैः किमपराद्धम् ॥ १२ ॥
भावं विज्ञातुमना मानिन्यास्तिर्यगालोक्य ।
द्वारोपान्ते विहसति वदत्यकाण्डे पुलकिताङ्गः ॥ १३ ॥
भित्तौ यूनि विरूढां तिलपुष्पीं दातुमायाते ।
सा निजपार्श्वविरूढामलुनात्तिलपुष्पिकां सकलाम् ॥ १४ ॥
भीरु तवायं को वा दुराग्रहो गुरुजनप्रश्ने ।
तावत्समयो यास्यति भिषजस्त्वद्दर्शनावशेषस्य ॥ १५ ॥
भुवनाधिनाथ भवता भवतापहरं किमाचरितम् ।
विरतिः श्लोकपदादौ प्रतिभाति न मामसान्तर्मे ॥ १६ ॥
भूषणपरिग्रहार्थं पेटीं सविधे समादधाना सा ।
हसितामालोक्य सखीं तां च यथावस्थितामकरोत् ॥ १७ ॥
भेषजमुपागतवति चिकित्सके दातुमबलायाः ।
वीक्षति नाडीं लोको वैद्यान्तरमाशु हाहाशु ॥ १८ ॥
भैमीभामाकररुहलालितपरिसंकुचच्चरणाः ।
स जयति कृष्णः सस्मितवदनस्ताभ्यां सहासमुपदृष्टः ॥ १९ ॥
भोगिनमालोक्य करे शम्भोरपसारितकराब्जा ।
गिरिजा जयति करग्रहपरिचालितपाणिलेशेऽपि ॥ २० ॥
भौकलिमाणसखं ददती भक्ष्याणि पृच्छती वार्ताम् ।
*कनकनयपउरान्तस्तल्लक्षणमभिवेदयामास* ॥ २१ ॥
भ्रूविभङ्गीलोलां गङ्गायां वीक्ष्य कलहंसीम् ।
हंसं गवेषयन्तीं पथिकः श्लथगात्रतामाप ॥ २२ ॥
मधुपः कुसुमं माल्याकारिणि न जहाति ते लुब्धः ।
मपिति वारितोऽपि हि किङ्करवैधृष्टमधुपेऽस्मिन् ॥ २३ ॥

मालाकारिणि मालमेनां कण्ठे ममार्पय मीत्या ।
एषा भवति महार्घा परतन्त्रां मां विजानीहि ॥ २४ ॥
मितभाषिणि तनुमाने सुरसे धृतलाघवासि तनुमाने ।
कथमिव सुरतौ दास्यं कुरुते तन्वति मयि रतौदास्यम् ॥ २५ ॥
मीलतु कुमुदं चन्द्रः प्रयातु चास्ताचलं रविरुदेतु ।
प्रभवामि नाम्बुजाक्षीं परिमोक्तुं निजभुजक्रोडात् ॥ २६ ॥
मुषितरदनक्षतादरमपह्नुतनखरक्षतं तन्व्याः ।
कूणितनेत्रप्रान्तं तस्याः सरचेष्टितं सराम्यनिशम् ॥ २७ ॥
मूकः केतकपत्रं मुग्धामालोक्य पाटयामास ।
सापि करस्थितमम्बुजमधोमुखं व्यतनुत प्रसभम् ॥ २८ ॥
मेषादीनां गणके कथयत्यायव्ययौ क्रमशः ।
पृष्टस्तृतीयभावं कया स जगाद सर्म भावम् ॥ २९ ॥
मैरेयघूर्णिताक्षिणि पृच्छत्यर्घं सहासमथ यूनि ।
अपहृतचेलाञ्चलया जगदे करकद्वयं गृहाणेति ॥ ३० ॥
मोचयति जीवितेशे पश्चान्मम कञ्चुकीबन्धम् ।
उच्छिन्नबन्धमूलः पुलकः समभूत्ससि ममाङ्गे ॥ ३१ ॥
मौहूर्तिकेन कथिते प्रवासदिवसे स्वगेहपतेः ।
गमनागमने भित्तिरपाकरोतीष्टिकाः सुभ्रूः ॥ ३२ ॥
मण्डनभूतं बालं मातृकुलादागता सुतनुः ।
कृतकृतकरोपतरला स्थापयति प्रतिपदं विलोकयति ॥ ३३ ॥
यजति निजगेहनाथे प्रातर्निद्राति मीलदक्षियुगा ।
पार्श्वस्थभित्तिमंरूढजारमुखमीक्ष्य हसिता सा ॥ ३४ ॥
यागं कुर्वति पत्यौ प्रवसति जारे समागते प्रमुम् ।
धूमच्छलगोपायितनयनजलं सा रुरोद चिरम् ॥ ३५ ॥
युगली रपाङ्गनाम्नोरमीमिलद्विकमिता कुमुदपङ्क्तिः ।
याच्यं किमत्र चित्रं नैशान्ति प्रेम्णि निर्बन्धः ॥ ३६ ॥

यूना कम्पितधैर्या स्वपतिं दृष्ट्वा पलितशीर्षम् ।
प्रतिवेशवधूस्नेहच्छलतः प्रच्छन्नकमकार्षीत् ॥ ३७ ॥
येनोपहासविषये वयसि न तत्कार्यमित्युक्ता ।
नियमव्रतापदेशाद्भूशयनाभ्यासमातनुते ॥ ३८ ॥
यैर्ग्रथितेयं वेणी सुगन्धतैलैः कचान्समीकृत्य ।
मम कृतसीत्कारायास्तान्येव नखानि तां विमोक्षन्तु ॥ ३९ ॥
योजनमात्रं चलितं पान्थं सुकुमारमिन्दुमुखमीक्ष्य ।
दर्शयति बलात्स्वगृहं स्वास्तृततल्पं क्रमावसथ्याग्र्या ॥ ४० ॥
यौवनगर्वितमध्वगमारमावसथं निनीषन्त्योः ।
विरचितवक्रकराङ्गुलि जयतितरामावसथ्ययोः कलहः ॥ ४१ ॥
यन्त्रपदाङ्गुष्ठयुगप्रहितो न पदात्पदं करी चलति ।
अभिसारिकाकुचद्वयदर्शनसंजातवारणाशङ्कः ॥ ४२ ॥
यः प्रतिपदं सखीभिः शिक्षावशतो न्यधायि हृदयेऽन्तः ।
उपपतिरिव सोऽपि गतो मानः प्रियदर्शनावसरे ॥ ४३ ॥
रत्नस्तम्भे स्वीयां प्रतिमामालोक्य रोषकलुषाक्षी ।
स्वान्तर्जनसमयोद्वेल्लत्करकमला वीक्ष्य तां जहास वधूः ॥ ४४ ॥
राजपथे विक्रेतुं कन्दुकयुगलं च लोहसर्पं च ।
आगतयोरथ यूनोर्मिथो जयत्यर्थनियमोक्तिः ॥ ४५ ॥
रिक्तोदपात्रकरतलमास मृगाक्षी सरित्तीरे ।
गुञ्जदलिपुञ्जमञ्जुलवञ्जुलजाले लताकुञ्जे ॥ ४६ ॥
रीतिमयभूषणापि हि चलति वधूः सा निमीलिताक्षियुगा ।
गर्भभरमन्थराङ्गी पुरः सपत्न्याः सकांस्यभूषायाः ॥ ४७ ॥
रुतमाकर्ण्य पिकानां का नाम न संभवेदुत्का ।
कथमुपनयाम्यनिद्रां चन्द्रांशुविभावितां रात्रीम् ॥ ४८ ॥
रूपभरगर्वशीला बाला वैवाहिके समये ।
नन्दति निजभवनजनेऽञ्जनबिन्दुः स्वालिके व्यतनोत् ॥ ४९ ॥

रेणुपरिधूसरालकचरमतनुः स्फोटितस्रवलयालिः।
ममकलशा रुदन्ती बाला शनकैर्गृहमयासीत् ॥ ५० ॥
रैवतकभूपरिसरे भैमीभामायुतः कृष्णः।
व्यत्ययमकरोद्विनिमयमनयोर्ज्येष्ठाकनिष्ठिकाभावे ॥ ५१ ॥
रोमलतिकालवाले पयो रसं नयनखञ्जनद्वन्द्वम्।
अतितृप्तिभावमाप्तं रसमास्वादयति नान्यमिदम् ॥ ५२ ॥
रौरवचर्मावृतया योगिरतासक्तया तमसि।
आलिङ्ग्य भीषितः पतिरुपागतो मन्दमेणाक्ष्या ॥ ५३ ॥
रङ्गाजीवबधूटीपरिपाटीं को नु विन्देत।
सममेव युवजनानां मनांसि वासांसि रञ्जयति ॥ ५४ ॥
लज्जानताननायाः परिणयने भर्तृसंमुखीनायाः।
ऊर्ध्वीकृततारायास्तदाननालोकनं जयति ॥ ५५ ॥
लाक्षारञ्जितचरणा चरणायुधकूजितं श्रुत्वा।
प्रक्षालयति स्वीयौ चरणौ सलिलैरहो दक्षा ॥ ५६ ॥
लिखति स्म मदनलेखं कमलदले नखरलेखन्या।
पद्मेषुरेव पद्मं कथमकरोदिन्द्रियं क्षुब्धम् ॥ ५७ ॥
लीलावपदुरक्षेपोचरलिततराम्बुजाक्षी सा।
स्वसखीमध्यनिविष्टा वलभीं तव पश्यति प्रसभम् ॥ ५८ ॥
लुलितालका वरोरूः समागते नैजगृहनाथे।
अर्धोन्मीलितनयनं देवरमभिवीजयामास ॥ ५९ ॥
लूनामपि तिलवाटीं विलोक्य हलिकाङ्गना परितः।
न बभार दुःखमन्तर्दृष्ट्वा कोशशणवाटीं ॥ ६० ॥
लेखसमर्पणसमये क्रोधाविष्टे धराधिपतौ।
राज्ञी जगाद कथमिव हन्तव्योऽयं मदीयकायस्थः ॥ ६१ ॥
लैङ्गिकमयापिता मा सख्या विरहातुरा बाला।
नतिमिपतत्समवादीदधुना शरणागतावमिति ॥ ६२ ॥

लोलनयनस्य पुंसः सविधेऽन्यजनस्य हृतवती चित्तम् ।
चैलाञ्चलसंयमनव्याजादभिदर्शितैककुचा ॥ ६३ ॥
लौहित्यं स्फटिकान्तः संक्रान्तं कौसुमं प्रदर्शयतः ।
सत्रासमन्यमेनं नतानना दर्शयामास ॥ ६४ ॥
चलिता प्रवसति दयिते द्वारोपान्तेषु गुन्द्रसलिलेन ।
अभिषिञ्चति साकूतं शंसन्ती त्वरितपरिवृत्तिम् ॥ ६५ ॥
लङ्घितुमसमर्थोऽयं दाक्षिण्यं वितथदत्तयत्राया: ।
बहु मानयति कटूक्तिं तयात्तप्रेमयन्त्रितो मन्त्री ॥ ६६ ॥
वारं वारं सुतनुर्द्वारमुपागत्य वीक्षतेऽश्रुमुखी ।
नो यास्यतीति प्रथमप्रस्थितकान्तस्य साध्वानम् ॥ ६७ ॥
विधिवन्नैजपुरोहितपूजायां चरणसंस्पर्शे ।
वनितायाः करयुगलप्रस्वेदेनाभवत्पाद्यम् ॥ ६८ ॥
वीरुन्निकुञ्जभवनं कोटरपारावतालिहुङ्कारैः ।
सुरतप्रवृत्तयूनोरनुकुरुते मणितमिव सततम् ॥ ६९ ॥
वेत्रं सहासदेवरकरोद्धृतं वीक्ष्य जलजाक्ष्याः ।
वेणीदण्डाहतितिततिसंक्रमितः पृष्ठतोऽपि च स्नेहः ॥ ७० ॥
वैशसमात्मप्रेम्णोर्विलोक्य सा नावदद्दूतीम् ।
सरमपवर्तिततारकमालिख्य चिरं निदाघतस(सुचि)भूमौ ॥ ७१ ।
वौषट् प्रातर्मन्त्रं कोऽन्तर्युक्त्वा स्थिते तूष्णीम् ।
अध्वर्युर्न जुहोति द्यावाभूम्यन्तरं पश्यन् ॥ ७२ ॥
वञ्चनचतुरः कुतुकी यतमानो वेदिकामध्ये ।
विष्णुक्रमणं बहुशस्तनोति मन्त्रं विना चित्रम् ॥ ७३ ॥
शयने निद्रापगमात्ताम्यन्मनसोः स्वगौरवव्रतयोः ।
कृकवाकुरुतं श्रुत्वा जयतितरां किमपि तद्यूनोः ॥ ७४ ॥
शातमृगराजनखरव्रुव्यत्करिकुम्भमुक्तमुक्ताभिः ।
अध्वानमीक्ष्य कीर्णं मोदं खेदं दधौ समं बाला ॥ ७५ ॥

**शिव** शिव शिबिरं त्यक्त्वा किं करवै सखि बहिर्गतो दयितः ।
साकूतं च सहासं मया समाकुञ्चिते देहे ॥ ७६ ॥
**शी**तोपचारनिकरं शिशिरे सहतेऽम्बुजाक्षी सा ।
सोऽपि तदीयकुचद्वयसंस्पर्शात्खेदमावहति ॥ ७७ ॥
**शु**द्धं दिनं पतिगृहं प्रेषयितुं पितरि पृच्छति द्विजं कन्याम् ।
आकर्ण्य संमुखीनं शुकं सा मोदमाधत्ते ॥ ७८ ॥
**शू**लं दत्त्वा स्कन्धे पुनरित्थमिति प्रतर्पितो जगदे ।
अद्यापि न मम हृदयादपयान्ति तदीयनयनान्ताः ॥ ७९ ॥
**शे**वधिमिवाधिगम्य प्रियाकुचद्वन्द्वमथ मनसि ।
कुर्वन्मनोरथशतं जज्ञे कर्तव्यतामूढः ॥ ८० ॥
**शै**शवजारमुपागतमसुको मम मातृभगिनीजः ।
इति सलज्जे गुरूणां पुरतो निर्व्याजमेणाक्षी ॥ ८१ ॥
**शो**धयति लिखति पुस्तकमभिके पठति प्रिया रात्रौ ।
दीपोद्द्योतनमिषतस्तैले रक्षां निवेदयति ॥ ८२ ॥
**पाट्**कौशिकं शरीरं शिष्याय गुरौ प्रकाशयति ।
साकूतहसितवदना जगाद काचिद्वरं किमङ्गेषु ॥ ८३ ॥
शुण्डादण्डाकृष्टे आमासन्ने घटे भग्ने ।
मातङ्गजेन पङ्कजनयना नयनाम्बु तत्याज ॥ ८४ ॥
**षो**डशसहस्रवनिताः समं स रमयन्हरिर्देवः ।
कष्टं पुराणपुरुषः पुरुषैरितरैः प्रतिस्पर्ध्यः ॥ ८५ ॥
**षण्ढो**ऽपि कामभावाविष्कुर्वन्नारोपितं स्मरावेशम् ।
खेदयति कामिनीमथ किमद्भुतं सखि मयि विपत्ते ॥ ८६ ॥
**स**रसीसलिलान्तर्गतमधोमुखं सलितानन्तं तरुणम् ।
तीरस्थिता विलोक्य स्वाङ्के पुलकाग्रनीपदह्राक्षा ॥ ८७ ॥
**सा** निजसखीषु बहुशो रचितप्रियपाविकानुकृतिः ।
सहसागतं विलोक्य प्रियमबला गर्भिमवास्मासीत् ॥ ८८ ॥

सिद्धिं नैजां स्त्रीपु प्रथयितुमुपघट्टमर्ककन्यायाः।
वृक्षाधिरोहसंस्थां कुलुकी कश्चित्प्रदर्शयति ॥ ८९ ॥
सीतां लक्ष्मणचरितं प्रजावतीं नित्यशोऽभिगायन्तीम्।
दृष्ट्वा श्रावयति परं तारा सुग्रीवचरितानि ॥ ९० ॥
सुषमा परावलोकि प्राप्तं जनुषः फलं ममाक्षिभ्याम्।
अकुसुमफलोद्भवानां का नु मदन्या स्थली लोके ॥ ९१ ॥
सूरिणि कथयति धर्मं परदारांश्चिन्तयेन्नेति।
आकर्ण्य चञ्चलाक्षी साचिमुखी प्राहसत्सुमुखी ॥ ९२ ॥
सेकेनार्द्रतनुः सा दैवान्नववार्षिकाभ्ररचितेन।
प्रस्वेदपुलककम्पा नार्यायै गोपयामास ॥ ९३ ॥
सैरभवाहनमद्य स्वप्नेऽहमपश्यमिति पतिवचः श्रुत्वा।
प्रथमं मुदितापि भृशं रुरोद परमङ्गना काचित् ॥ ९४ ॥
सोमार्धनिभं नखरक्षतं नवं प्रतिनिशं स्म(र)ते दयितम्।
किमिदमिति दर्शयन्ती विहसन्ती खेदयति हालिकयोषा ॥ ९५
सौरतखेदात्सुप्तं विहसन्ती कापि संजगाद पतिम्।
आवां मिथःसहायौ कुर्वः प्रविभज्य कार्यमर्धार्धम् ॥ ९६ ॥
संतत्यभाववशतः खिन्ने परिपृच्छति द्विजं दयिते।
नैजमनपायिवन्ध्याभावं श्रुत्वा मुमोद मदिराक्षी ॥ ९७ ॥
हलिकाङ्गनान्धतमसाऽभिसारिणी निकटदेवकुले।
हस्तेन परामृशती बुभुजे पान्थेन दृष्टचापेण ॥ ९८ ॥
ह्रासपरिपाटलाधरमाकूणितनेत्रमुल्लसद्गण्डम्।
अलमिति यन्मदिराक्षी जगाद तत्कृन्तति हृदन्तः ॥ ९९ ॥
हिमनिबिडाश्लिष्टतनु मपीडितोरोजमभिशयानम्।
रतये नु मिथुनमसकृत्प्रबोधयति हैमनः पवनः ॥ १०० ॥

---

१ जहर्ष—मुमुदे.

रसिकानन्दनिकायां श्रीमत्कविकामराजरचितायाम् ।
शतकं तृतीयमेतत्पूर्णं शृङ्गारकलिकायाम् ॥ १ ॥

## हरिकृष्णभट्टविरचितं

# सीतास्वयंवरकाव्यम् ।

श्रीराजराजोऽजनि यस्य गेहमाशिश्रियच्छ्रीः श्रितचारुरूपा ।
**सीता**भिधाना जनको जनानां यथा सुतानामविता तथा सः ॥ १ ॥
युधिष्ठिरो भीमपराक्रमश्च जगत्त्रयेऽप्यर्जुनकीर्तिरासीत् ।
अलंकृताहीनकुलः कुलाब्जप्रकाशभानुः सहदेवतुल्यः ॥ २ ॥
तस्मिन्नरेन्द्रे **मिथिला**धिनाथे स्वर्गस्पृहायां शिथिलादरोऽभूत् ।
न वासवस्य स्मरति स्म वीक्ष्य तं नन्दनं निन्दति नव्यवाटीः ॥ ३ ॥
शूली शिवोऽभूत्सगदोऽथ विष्णुः सरुग्रविस्तस्य सुतोऽथ मन्दः ।
उद्यानदेशः समभूत्सगुल्मः क्षयी शशी नैव जनस्तदाभूत् ॥ ४ ॥
कथा पुराणे खलु पाण्डुपद्मकस्याप्युदावर्तवती स्रवन्ती ।
अभूत्तदा सप्रदरोऽरिवर्गस्तस्मिन्धरां शासति धीरधीरे ॥ ५ ॥
तस्याभवच्छ्रीर्दुहिता हिताय चराचरस्याखिललोकवन्द्या ।
अयोनिजा चेतसि मन्यमाना निजेऽभिधाने चरितार्थमस्य ॥ ६ ॥
क्षणे क्षणे सेक्षणमीक्षकाणामपारलावण्यसुधासमुद्रे ।
निमज्जयन्ती नवयौवनेन प्रकाशितं रूपमवाप **सीता** ॥ ७ ॥
पुत्रीं पवित्रीकृतवंशगेहां देहान्तरङ्गश्रितपञ्चबाणाम् ।
प्रतर्क्यतर्कागमशुद्धबुद्धिरहो विवाहे समयं स मेने ॥ ८ ॥
अचीकरत्स्क्रूप्तमनल्पशिल्पैः सुशिल्पिभिः स्वर्पतिशिल्पिकल्पैः ।
वसुंधरामण्डलमण्डनाभं सीताविवाहाय स मण्डपं तम् ॥ ९ ॥
मसारसस्फाटिकपद्मरागरागैः सुकिर्मीरितमध्यभागः ।
सुराङ्गनामज्जनजातरागं यो मण्डपेशोऽन्वगमत्प्रयागम् ॥
वाराङ्गनागीतिविधानुवादाः प्रवीणवीणास्वरागमिश्राः ।
नृणां वितेनुः सम्दङ्गनादा यच्छालभञ्जीकृतगानशङ्कां ॥

वातोर्मिभिर्दोलितसत्पताकाश्रेणिः समेतागरुधूमवल्ल्या ।
यत्रोपरिष्टाच्चिहृतयामुनौघमन्दाकिनीजां श्रियमन्वकार्षीत् ॥ १२ ॥
सोपानमार्गैरुपरि प्रयातो जनो विहर्ता यदधित्यकासु ।
कनीतदग्वृत्तिरुपत्यकासु गजावलीः कूर्मकुलानि मेने ॥ १३ ॥
यत्कुट्टिमाट्टालविटङ्कवासैः कलापिभिर्दुन्दुभिमन्द्रनादः ।
अमानि धीरध्वनिरम्बुदानामकालकेकीकृतलोकचित्रैः ॥ १४ ॥
अभ्रंलिहाग्रस्थसुरेन्द्रनीलप्रभावितानन्दजलाशया यत् ।
नानामणिक्लृप्तमहेन्द्रचापं पाथोऽपि दात्यूहकुलं ययाचे ॥ १५ ॥
प्रतप्तजाम्बूनदजालमुक्तैर्मुक्तागणैर्यत्र सुधासवर्णैः ।
सुमेरुशृङ्गागतगौरगङ्गाप्रवाहलक्ष्मीरुररीकृताभूत् ॥ १६ ॥
यद्भित्तिभागे लिखितस्य खिङ्गैरनङ्गलेखस्य सुवर्णवर्णैः ।
चमत्कृतावाचनचातुरीभी रोमाञ्चकस्याञ्चति चञ्चलाक्षी ॥ १७ ॥
पुरंदराशाचितभित्तिनद्धैः स्फुटज्जपापाटलपद्मरागैः ।
सूरोदयानन्दमनायि यत्र मुहुर्निशीथेऽपि च कोकलोकः ॥ १८ ॥
वर्षास्वपि स्वर्णपिनद्धरत्नयद्दीर्घिकानीरनिवासहृष्टाः ।
मृणालिनीबीजभुजो मराला न मानसं मानसमप्यनैषुः ॥ १९ ॥
यचन्द्रशालाश्रितगायकानां स्थानप्रदानोत्सुकनायिकानाम् ।
गेयं विपञ्चीगुणरागपेयं मध्यंदिने साध्वधिनोद्दिनेशम् ॥ २० ॥
बालानने स्फाटिकजालमालास्फुटैः स्फुटच्चामरसाभिरामैः ।
मन्दाकिनीस्वर्णसरोजराजीशोभा भृशं यत्र समन्वभावि ॥ २१ ॥
सितोपलाबद्धतरासु यत्र स्त्रीणा स्फुटत्कोकनदोपमेषु ।
लाक्षारसक्षालितपादपद्मपदेषु पद्मीयति चञ्चरीकः ॥ २२ ॥
*यदङ्गणे विद्रुमभूमिसस्थास्तद्रागसंसृष्टमलक्षभावाः ।*
अवाकिरंश्चञ्चुपुटेन कीरा मुक्ता मुहुर्दाडिमबीजबुद्ध्या ॥ २३ ॥
निधाय यत्राजगवं स चापमित्ति क्षितीशोऽथ पर्ण बभाण ।
यो भङ्क्ष्यतीमं भुजवीर्यशाली स जानकीजानिरपूर्वमाली ॥ २४ ॥
(कुलकम्)

दूता दिगन्तेषु जगुस्तदासामितीशकोदण्डकखण्डकृद्यः ।
तस्मै नृपो दित्सति देवताभां कन्यां विनिद्राम्बुरुहायताक्षीम् ॥ २५ ॥
श्रुत्वा पणं पार्थिवपुङ्गवस्य निजं भुजावीर्यमखर्वगर्वाः ।
कन्यानिमित्तं बहु मन्यमाना दिग्भ्यः समाजग्मुरथो नरेन्द्राः ॥ २६ ॥
कलिङ्गवङ्गाङ्गतिलङ्गगौडपाञ्चालनेपालकमालवेशाः ।
सौवीरगन्धारकमत्स्यमद्रत्रिगर्तकानर्तविदर्भनाथाः ॥ २७ ॥
काम्बोजकर्णाटककामरूपकाश्मीरकुकेरलकेकयानाम् ।
करूषसिन्धूत्कलसौभशाल्वपटच्चराणामधिपा युवानः ॥ २८ ॥
चीनान्ध्रलाटद्रविडाधिनाथा द्वीपाधिपास्तीर्णपयोधयोऽपि ।
रूपश्रिया न्यक्कृतपञ्चबाणाः प्रचण्डकोदण्डधरा धरेन्द्राः ॥ २९ ॥
प्रत्युज्जगामावनिपालचक्रं चक्राङ्कुशाम्भोरुहमत्स्यवज्रैः ।
महार्हचिह्नैरुपलक्षिताभ्यां पद्भ्यां नरेन्द्रोऽपचितिं चिकीर्षुः ॥ ३० ॥
विधाय तेषां विधिवन्नृपाणां यथाक्रमं शक्रपराक्रमाणाम् ।
अर्घ्यादिकं कृत्यमनर्घशीलः प्रावेशयत्तान्निजराजधानीम् ॥ ३१ ॥
रम्येषु हर्म्येषु सुरेन्द्रसद्मकल्पेष्वनल्पाद्भुतचित्रवत्सु ।
वासाय तान्वासवतुल्यधामा समादिशच्छ्रीजनको जनेशः ॥ ३२ ॥
आधोरणा विश्रमयांबभूवुर्बाधो रणानामिह यैर्विसोढः ।
मतङ्गजानां प्रवरान्नृपाणां मतं गजानामिह ये विदन्ति ॥ ३३ ॥
रथोत्तमान्सारथयो यथा स्वं तथा पृथक्त्वत्कुरभो हरिभ्यः ।
मारोह एके विदधुर्विभारान्कमेलकान्मेलितभृत्यवर्गाः ॥ ३४ ॥
वैदेहसूदैरुपकल्पितं तद्धृतप्लुतं स्वादु चतुर्विधान्नम् ।
तिक्तोषणाम्लैर्लवणैः कषायैः रसैर्लसद्व्यञ्जनवर्गसंस्थैः ॥ ३५ ॥
सर्वे तथा भूमिभुजोऽप्यभुञ्जन्हैमेष्वमत्रेषु सभृत्यवर्गाः ।
वीक्ष्यामरा यद्वहु मेनिरे स्वात्सुधाधिपत्याद्वसुधाधिपत्वम् ॥ ३६ ॥
शुभे विधायक्षगुणोपपन्ने लग्ने तथा दीनकदैवार्हीने ।
रङ्गे महामण्डनमण्डिताङ्गे राजा महारामदमान्तुदार ॥ ३७ ॥

रङ्गान्तरं लोकवरं वरास्ते समं समासेदुरदीनसत्त्वाः।
आकर्णितेनाद्भुतवर्णनेन गुणेन कृष्टा इव कन्यकायाः॥ ३८॥
मयेन या रत्नमयेन सृष्टा द्रव्येण नव्येन पृथासुतस्य।
जिता सभा येन विराजितापि ते मण्डपे मण्डनतामवापुः॥ ३९॥
ततो नभःस्तम्भितभासुरोच्चविमानवातायनलम्बिबिम्बैः।
**सीता**विवाहागतपार्थिवानां स्वर्गीयवर्गैः समलोकि लोकः॥ ४०॥
देवा नृदेवा अपि पूर्वदेवा रक्षांसि यक्षाः प्रतिकर्मदक्षाः।
नागाः सुपर्णा अपि हेमपर्णाः समाययू राजसुताविवाहे॥ ४१॥
तस्मिन्समाजे न ममुर्न लोकास्तत्रानुमानं त्वहमेतदूहे।
यद्दर्शितं स्वीयमुखे जनन्यै जगच्चरस्थावरमच्युतेन॥ ४२॥
नृपः श्रिया निर्जितकामरामां श्यामां महीमण्डलमण्डनामाम्।
धात्रीकरालम्बितचारुमालां बालां समाजेऽथ समाजुहाव॥ ४३॥
अहं निराधिर्न मृणालिनीव विना हरिं स्यामिति तर्कयन्ती।
मुहुर्भयं किंचन चिन्तयन्ती दुःशासनाच्चेतसि रावणाच्च॥ ४४॥
पदे पदे निन्दितधार्तराष्ट्रा पराक्रमं कर्तुमशक्नुवन्तः।
वरा इतीमे हृदि मन्यमाना कृष्णेव सा संसदमाप **सीता**॥ ४५॥
(युग्मम्)
रराज तद्राजसभागता सा सुधासितानां सविधे ग्रहाणाम्।
सुरासुरैः क्षुब्धसुदुग्धसिन्धोः पारस्थिता श्रीरिव चारुरूपा॥ ४६॥
जितो गतेनैव गजः सुराणां भ्रुवा धनुः कल्पलताङ्गयष्ट्या।
तया कटाक्षैः किल कल्पवृक्षा जिता नृपाः कामदुघापि दृष्ट्या॥ ४७॥
जितेन्दुवक्त्रं जितरम्भमूरुं युगं तु कण्ठो जितकम्बुरस्याः।
अङ्गैरियं निर्जितसर्वरत्नैः कृता विधात्रा बहुलप्रयत्नैः॥ ४८॥
अस्यां स्थितायां जनकात्मजायां लोकावलीमध्यमणिप्रभायाम्।
रत्नार्थिभिर्दानवदेववृन्दैर्मुग्धैः स दुग्धाम्बुनिधिर्ममन्थे॥ ४९॥
न खञ्जनो विस्मयते निरीक्ष्यैतस्या विशालं चपलं च चक्षुः।
विलोक्य को धैर्यमुपैति लोके न खञ्जनो यस्य तुलामुपैति॥ ५०॥

अस्या भ्रुवो ये धनुषः कटाक्षैः शरैः स्मरस्यापि जिता युवानः ।
तत्रेतुरीशस्य कथं धनुस्ते सज्यं विधातुं मनसापि शक्ताः ॥ ५१ ॥
विलोक्य तां लोकनमस्कृताङ्गीमनुप्लवन्नप्सरसो रसोल्वैः ।
इत्थं वचोभिः सुमनस्तरूणामपूजयँस्ताः सुमनोभिरेताम् ॥५२॥(कुलकम्)
राज्ञां तदालोकनलोलुपानां मनः परं दृष्टिषु संक्रमय्य ।
आसीत्स्थितानामतिविस्मितानां मनुष्यभावेऽप्यनिमेषवत्त्वम् ॥ ५३ ॥
विलोक्य तस्या वदनं सुधांशुं कन्दर्पपाथोनिधिवृद्धिहेतुम् ।
विकाशमीयुर्भृस(भृश)मुल्लसन्ति तेषां मनःकैरवकोरकाणि ॥ ५४ ॥
निपीय रूपं हृदि सस्मरुस्तत्त्रिलोकनायामरनायकं ते ।
तथार्जुनं तत्परिरम्भणाय स्तवाय शेषस्य सहस्रशीर्ष्णः ॥ ५५ ॥
सौवर्णसिंहासनसंस्थितानां सूरेन्दुवंशोद्भवपार्थिवानाम् ।
प्रकाशिते बन्दिजनैश्चरित्रे संचारिते चागरुचारुधूपे ॥ ५६ ॥
आहारि हैमाचलसानुगानां यदामराणां क्षितिपैरभिख्या ।
संबोध्य **सीतां** विबुधेज्यबुद्धी राज्ञः पुरोधा गिरमित्यवादीत् ॥ ५७ ॥
अभूतपूर्वे भवतीमदभ्रवलोक्य सङ्गमिभुजां समाजे ।
वैदेहि गङ्गाधरधन्वमङ्क्ते दाता वरेण्याय वराय तातः ॥ ५८ ॥
इतीरयित्वा विरते द्विजेन्द्रे मृगेन्द्रवत्पर्वतशृङ्गतस्ते ।
निजासनेभ्यः सहसोदतिष्ठन्परामृशन्तः परिघोरुबाहून् ॥ ५९ ॥
लाभाय सुस्त्रैणशिरोमणिस्ते दर्पादहंपूर्विकया कयापि ।
धराधिपा गाढतरङ्गराजचूडामणेश्चापसमीपमापुः ॥ ६० ॥
ते वीक्ष्य चापं गुरु शंकरस्य न शंकरं सज्जविधानकाले ।
भुवं कराभ्यामपनेतुमीशाश्चतुर्दिगीशा अपि नावनीशाः ॥ ६१ ॥
केचिद्भुजाभ्यां भुजगेन्द्रभोगमहेन्द्रमातङ्गकरोपमाभ्याम् ।
उन्नेतुकामा जगृहुस्तदैशं धनुः पुनश्चालयितुं न शेकुः ॥ ६२ ॥
निःश्वासमिथ्यासमवेत्य दैवं बाल्यमबाल्यकामनोदरस्याम् ।
असण्डितं गमिभुजो स्रमुपंलतम्बलज्जा विधिविप्रलब्धाः ॥ ६३ ॥

हतौजसो निर्जितवैरिवर्णे निजान्भुजान्धिग्धिगिति ब्रुवन्तः ।
ततो नृपाः स्वानि निवेशनानि यथागतं जग्मुरवाङ्मुखास्ते ॥ ६४ ॥
अभग्नमग्निप्रतिमप्रभावैः कोदण्डमाखण्डलतुल्यवीर्यैः ।
निरीक्ष्य चिन्ताम्बुधिमग्नचित्तो जगाद वाचं मिथिलाधिनाथः ॥ ६५ ।
चापो न कृष्टः किल राजकस्य शर्वस्य सर्वस्य च गर्वहारी ।
केनापि नाटङ्कि न चाप्यचालि निर्वीरमुर्वीतलमद्य जातम् ॥ ६६ ॥
न चक्षमे राक्षसलक्षनाथो गर्वस्य पाथोधिरहीनबाहुः ।
बाहूद्धृतस्थाणुधराधरेन्द्रस्तत्कैकसीसूनुरिदं वचोऽस्य ॥ ६७ ॥
सलीलमामीलितभीमचक्षुश्चक्षुःश्रवा वा सुकथाप्रसङ्गः ।
सावज्ञमज्ञाननिधिर्व्यसर्पत्सर्पाधिराजोरुधनुःसमीपम् ॥ ६८ ॥
चापं स संचालयितुं न सेहे बलात्यये शंकरकिङ्करोऽपि ।
मृगेन्द्रतीभेन्द्रविदोर्विदारैर्गोष्ठश्चतुर्धस्यपिवोऽपि गोः किम्(?) ॥ ६९ ।
गतेषु भूपेषु निवेशनानि पुलस्त्यसूनावपि भग्नदर्पे ।
विषादिचित्ते जनके जनेशचिन्ताकुले चापि कुले निमेश्च ॥ ७० ॥
निमन्त्रितो मन्त्रविदां वरिष्ठो गाधेरथो सूनुरगाधबोधः ।
समाययौ सानुजरामयुक्तो नृपेण सार्धेण च सोऽभ्यगामि ॥ ७१ ॥
सत्कृत्य सत्कृत्यविदर्चनाभिर्मुनिं ततो दाशरथी रथीशः ।
अमज्जदानन्दसुधासमुद्रे भद्रं हि सत्संगमतः किमन्यत् ॥ ७२ ॥
तेषूपविष्टेष्वथ विष्टरेषु विशिष्टशिष्टाचरणे निविष्टः ।
अतिष्ठिपद्दृष्टिलवेन पृष्टे भृत्यान्नृपोऽनुष्ठितपाणियोगान् ॥ ७३ ॥
रथाङ्गशब्दैः प्रतिराजरथ्यं हेषाभिरश्वद्विजबृंहितैश्च ।
समाकुलं मङ्गलतूर्यघोषैः सुतानैषीत्स्वपुरं सपक्षः ॥ ७४ ॥
प्रसादमालाश्चदबालचन्द्रबिम्बाननां राघवरूपऋद्धिम् ।
प्रेम्णा पपुः पौरपुरन्ध्रिवर्गा दर्पोल्लसन्मञ्जुलमञ्जुनेत्रैः ॥ ७५ ॥
मुनिं तदानुव्रजतो नृपस्य प्रत्यम्भसोभाहुतचित्तवृत्ते ।
मुहुर्मुहुर्लोचनचञ्चरीको निपेततू रामपुखारविन्दे ॥ ७६ ॥

पक्षोल्लसद्दससहस्रनेत्रपुरोहितश्रीनिवहं वहन्तः ।
अशीतरुकौशिकवंशदीपाः प्रापुर्महामण्डपमण्डनत्वम् ॥ ७७ ॥
रामं निकामं नयनाभिरामं कामं निपीय क्षणमीक्षणाभ्याम् ।
सीताभिसंधौ पतितापि धैर्ये चरीकरीति स तरीमनल्पाम् ॥ ७८ ॥
हैमासनाध्यासिषु तत्र तेषु पत्रेषु पद्मप्रभवैलभेषु ।
नृपो निधायाञ्जलिमात्यमौलिं मुनिं बुभुत्सुस्तमिदं जगाद ॥ ७९ ॥
कंदर्पदर्पापहदेहसंपत्कपाटवक्षा युगदीर्घबाहुः ।
अयं सुतो वंशमलंकरिष्णुः कलङ्कशाका(खा)रहितस्य कस्य ॥ ८० ॥
अधिष्ठितां लोकगुरुर्विलोक्य धियं तदीयां विनयं नयं च ।
राजानमाजानुविलम्बिबाहुं तं ज्ञापयिष्यन्नृपिरित्युदाह ॥ ८१ ॥
अयं दयी दाशरथिः कुमारो वंशाङ्कुरः पङ्कजिनीप्रियस्य ।
यत्पादपद्मस्य परागसङ्गात्सुस्त्रीत्वमापाथ शिलाप्यहल्या ॥ ८२ ॥
मदध्वरध्वंसनपक्षरक्षःकक्षानलस्ताडितताडकोऽयम् ।
सलक्ष्मणः पूर्णबलक्षपक्षेऽप्यलक्ष्मपद्मेन्दुविलासहासः ॥ ८३ ॥
धराभरापायविधावतीन्द्रः सुहृत्समुद्रोल्लसनैकचन्द्रः ।
समग्रलावण्यसुधासमुद्रः प्रतीतनामा भुवि रामचन्द्रः॥८४॥ (विशेषकम्)
प्रकाशिते तद्गुणसिन्धुबन्धौ श्रोतृश्रुतिप्रीतिसुधाविधाने ।
महर्षिणा हर्षणगद्गदस्य धराधिपस्याजनि लोमहर्षः ॥ ८५ ॥
स आशिखं पादनखाददोषं निरूप्य रूपं जितमीनकेतोः ।
मेनेऽस्य योग्यां तनयां परस्य समस्तयोषित्कुलमौलिरत्नाम् ॥ ८६ ॥
तद्रूपपीयूषसुसानुभूतेः सुकर्कशं तर्कयतोऽस्य चापम् ।
बभूव भूपस्य स रामचन्द्रश्चकोरकोको(?)दितमाधहेतुः ॥ ८७ ॥
निपीय रूपं नयनाभिरामं निशम्य वंशे तिलकं नृपाणाम् ।
कुमारसेनं च कुमारमारकल्पं राज्ञाप्यपायि मति गाधिपुत्रम् ॥ ८८ ॥
इयं कथा सार्थवदा सुधाभिर्ज्वरातिदूने रसने गितेव ।
चिरेण पुत्रीपणतापि तेने माधुर्यमाधिग्मति गाधिसूनोः ॥ ८९ ॥

अस्माकमस्मिन्हृदयाधिताप गतोऽस्ति दृग्गोचरतां कृपालो ।
भवान्मुनेऽवग्रहतापितानां काले कृषीणामिव वारिवाहः ॥ ९० ॥
वितापमन्तःकरणं विधित्सुर्दित्सुः पुनर्जीवितमस्य विप्रः ।
ऊचे कृपाद्रावितचित्तवृत्ताः पराधिभङ्गप्रयता हि सन्तः ॥ ९१ ॥
एतद्धनुर्भेत्स्यति रामचन्द्रो वृथा कृथा मा नृप तापमन्तः ।
विधेहि विश्वासमृते मदुक्ते तदत्र तेऽहं प्रतिभूर्भवामि ॥ ९२ ॥
तमःसु दुर्गेष्विव काननेषु न चित्रभानोः स्खलति प्रभावः ।
चापेऽन्यभूपालयशःशशाङ्कस्वर्भानुकल्पेऽपि तथास्य शक्तिः ॥ ९३ ॥
तद्वाक्यपीयूषरसातिवर्षोद्धर्षाकुले राजनि जायमाने ।
मानेन कस्यारतुपारभूभृत्सुतां सुता सावनिचक्रभर्तुः ॥ ९४ ॥
मुनिर्मनाग्हासविलासभासं समादिदेशाथ जयेति रामम् ।
कोदण्डमालोकय लोकभीमं महीपतेः पूरय शूर कामम् ॥ ९५ ॥
श्रुत्वा वचः कौशिकवंशकेतोश्चेतोहरं प्राञ्जलिरग्रतोऽस्थात् ।
जनस्य राज्ञो जनकस्य रामस्तथात्मनो वा जनकात्मजायाः ॥ ९६ ॥
तं प्रण्यपसद्गुरुमाहिताग्निं कर्तुं धनुर्भञ्जनमञ्जनाभः ।
मृगेन्द्रविक्रान्तगतिस्ततोऽसौ चण्डीशकोदण्डसमीपमागात् ॥ ९७ ॥
निरीक्ष्य तत्कार्मुकमुग्रतेजाः प्रसुप्तभोगीश्वरभोगभीमम् ।
भीमस्य भीमासुरभीतिकारि प्रदक्षिणं दक्षिणलक्षणोऽगात् ॥ ९८ ॥
ततो गृहीत्वैककरेण रामः कामप्रसूनेष्वसनं यथैव ।
द्रागाततज्यं मिषतामकार्षीत्सभासदामेतददीनसत्त्वः ॥ ९९ ॥
भ्राजिष्णुजिष्णुस्तमचारुचापधनं विनिन्दन्स वपुःश्रिया तत् ।
चकर्ष हर्षं जनयञ्जनानां बभञ्ज भञ्जन्दशमौलिमानम् ॥ १०० ॥
छन्ना नरेन्द्रैर्न विचालितं यद्धनुस्तद्रघुनन्दनेन ।
कार्यं सहस्रोस्त्रविधानयोग्यं विधीयते जातु न तारकाभिः ॥ १०१ ॥
किमत्र चित्रं त्रिपुरारिचापोऽमुना सलीलं शकलीकृतो यत् ।
मदान्धमातङ्गघटां परिघ्नः किं केसरी न मजरीहरीति ॥ १०२ ॥

विलोक्य लोकेन जयेति तस्य सपर्यया सार्धमुदीर्यमाणे ।
**सीता** समारोपयदस्य कण्ठे कण्ठीरवाकुण्ठपराक्रमस्य ॥ १०३ ॥
जितप्रवालेन नखैस्तलेन करेण मालामवलम्ब्य माला ।
वर्षा ववर्षामरभूरुहाणां पुष्पाणि गन्धोन्मदषट्पदानि ॥ १०४ ॥
ववौ समीरः सुरसिन्धुनीरविकाशिपङ्केरुहरेणुगन्धि ।
महोत्सवे तद्दिवि देवनुन्ना मन्द्रं मुहुर्दुन्दुभयो विनेदुः ॥ १०५ ॥
सभा जयन्ती च सभाजयन्ती त राघवं माध(द)वती नुनाव ।
आकर्ण्य कर्णे प्रणिधिप्रणीतं कठोरकोदण्डविघट्टनं तत् ॥ १०६ ॥
अभूत्स तापाय दशाननस्य सिन्धोर्यथा वाडवहव्यवाहः ।
अमानि मालापहरं नरेन्द्रैर्विश्वस्य निःश्वस्य तदा महर्षे ॥ १०७ ॥
रङ्गेऽमुमानीतवतोऽस्य विश्वामित्रत्वमत्र स्फुरतीति चित्रे ।
चकोरवत्प्रीतियुजि क्षितीशे तदात्मजाया च कुमुद्वतीवत् ॥ १०८ ॥
पयोधिवत्कौशिकवंशदीपे तमोपहोऽराजत **रामचन्द्रः** ।
गुरुं गुरोश्चित्रशिखण्डिजस्य स्फूर्ति(र्ती)स्तिरस्कर्तुमपि क्षमं स्वम् ॥ १०९ ॥
वक्तुं स वार्तामजनन्दनाय विदेहराजः प्रजिघाय तूर्णम् ।
सा केतुभिस्तोरणमण्डलैश्च साकेतपूर्भूरिविलोकनीया ॥ ११० ॥
विलोकितायाखिललोकसारा सारामकासारवती द्विजेन ।
गृहान्निरीक्ष्याखिलसागराणां रत्नैर्विचित्रानथ नागराणाम् ॥ १११ ॥
विप्रोऽविशद्राजगृहं विशालं वियद्विभागाश्रितचन्द्रशालम् ॥
प्रस्कन्दितेन स्वरथाद्यथावत्सविष्टरैः स्वागतवाक्यपूर्वैः ॥ ११२ ॥
समर्हणैः पङ्क्तिरथेन तेन समाजितेनाशु सभाप्यभा(जि) ।
धरासुरापादि निवेद्य पूर्वं विप्रः प्रणामं मिथिलाधिपस्य ॥ ११३ ॥
**रामस्य** त विक्रमशुभ्रशक्तेर्न्यक्केन वाक्येन जगाद भूपः ।
द्विजाधिपाद्वागमृतं निपीय पीयूषतः स्वादुरसं रसेन्द्रः ॥ ११४ ॥
समादिशत्सैन्यपतिं प्रजाशु प्रयाणघोषं खलु घोषयेति ।
प्रास्थानिके दुन्दुभिमन्द्रनादे समं समुज्जृम्भति दिक्षु मङ्क्षु ॥ ११५ ॥
(युग्मम्)

यथायथं क्षत्रियपुङ्गवास्ते संनह्य भेजुर्वरवाहनानि ।
मतङ्गजैः कज्जलशृङ्गितुङ्गैस्तुरङ्गमैर्निर्जितवातवेगैः ॥ ११६ ॥
वरूथिभिर्दाशरथी रथैश्च सेनाजगामाद्भुतयोधजुष्टा ।
संगच्छमानं बहुमानपूर्वमभ्यागतः सभ्यतमं तमर्च्यम् ॥ ११७ ॥
उपानयत्स्वं पुरमानिनाय स मैथिलः कोशलदेशनाथम् ।
धराधिपौ वासववित्तपालसमौ समाजं समये समेत्य ॥ ११८ ॥
कन्याकुमारोद्वहनोत्सवं तौ वितेनतुः स्वप्रमुतानुरूपम् ।
तां रामरामावरणे द्विभिख्यामाख्यातुमीशः कथमेकजिह्वः ॥ ११९ ॥
शेषोऽप्यशेषाननयुग्मसंख्यैर्यां तच्छतैर्वक्तुमनीश्वरः स्यात् ।
परापवादानृतदूषिताया गिरः पवित्रीकरणाय कृत्यम् ॥ १२० ॥
तितिक्षुभिः क्षाम्यमिदं कवीन्द्रैः शुकस्य मे यद्गरुडायितं स्यात् ।
अपारसंसारपयोधिपूरे निमज्जतां नैकजनुस्तनूनाम् ॥ १२१ ॥
पोतायितैं रामगुणैरुदारैर्भूयात्कृतार्था मम भारतीयम् ।
त्वन्नाम रामाखिलकामधाम निष्कामनिःश्रेयसदं वदन्ति ॥ १२२ ॥
मा सन्तु तेषां यमयातनास्ता या इन्द्रवज्रादपि दुःसहाः स्युः ।
नयद्द्रवीभूतमभूतपूर्वमुदाहृदाविष्कृतशान्ति पुंसाम् ॥ १२३ ॥
भवत्कथाकर्णनमाधुरीभिरुपेन्द्रवज्रादपि तत्कठोरम् ।
वर्णा भवद्वर्णनपूर्णकर्णाः संसारपाथोनिधिमुत्तरन्ति ॥ १२४ ॥
(युग्मम्)

किमत्र चित्रं द्विजबाहुजाद्या गतिं लभन्तेऽप्युपजातयोऽन्ये ।
त्रिभिस्त्रिपथाश्रितचारुवृत्तैः कृतं यथाबुद्धि मया बुधैस्तत् ।
विलोकनीयं रघुनन्दनस्य यतो यशो लोकगुरोर्गुरुत्वात् ॥ १२५ ॥
श्रीधीरपीताम्बरनन्दनेन कृता सकृत्सत्कविवन्दनेन ।
हत्सारिसारस्यतदिव्यधाम्ना काव्यं प्रणीतं हरिकृष्णनाम्ना ॥ १२६ ॥
श्यामा कामाभिरामा सविधगततडित्कामरामाभिरामा(म)-
श्यामावामाक्षिदृष्टा सकलजनमनःप्रीतिकादम्बिनीव ।

विभ्राजद्भूरिभूषामणिकिरणहरीप्वासशोभा विवाहे
जीयात्पुत्र्या धरित्र्याः सह बहलगुणग्रामधरा राममूर्तिः ॥ १२७ ॥

इति श्रीहरिकृष्णभट्टविरचितं जानकीस्वयंवरं काव्यं समाप्तम् ।

---

## श्रीव्रजराजदीक्षितविरचितं

## षड्ऋतुवर्णनकाव्यम् ।

निजार्धहृतशंकरं सकलदैत्यनाशंकरं
जगत्त्रितयशंकरं स्वजनचित्तनिःशंकरम् ।
समाशु भजतः पुरं धृतवसुंधरान्तःपुरं
करोतु निजतः पुरं पशुपतेः सदान्तःपुरम् ॥ १ ॥

श्रीसामराजगुरुनाथपदं विभाव्य
श्रीसामराजपदपद्ममिलिन्दकोऽहम् ।
श्रीकामराजपितृपत्परिसेवनेन
श्रीकामराजप्रतनारचनां करोमि ॥ २ ॥

आज्ञया विबुधेशस्य षर्ड्तु(?)कृतसेनकः ।
शूलपाणिं शिवं जेतुं चचाल कुसुमायुधः ॥ ३ ॥

सौरभ्यसौरभितसौरभगअरीणु
भृङ्गावली विजयते विजयाय यूनाम् ।
श्रीमन्महामदनभूमिपतेः सदैव
संलग्नतीक्ष्णतरबाणधनुर्लतेव ॥ ४ ॥

भृङ्गाङ्गनालिनिवहैर्मधुपानलुब्धैः
संवेष्टितानि परितो नवकिंशुकानि ।
किं कालकूटरसलेपनलेपिता हि
चन्द्रेषवः स्मरनृपस्य वने विभान्ति ॥ ५ ॥

मलयजनितशक्षोमूतबालप्रवाल-
प्रकरसुरभिवाहैर्गन्धवाहैः समन्तात् ।

---

१. 'षर्ड्तु' इत्युचितः पाठः.

तरलतरलचञ्चत्पल्लवा भाति रम्भा-
सरणिरिह पताकालीव कामस्य राज्ञः ॥ ६ ॥
नूनं वियोगिजनवैरिचमूजयाय
निर्गच्छतः कुपितकामनराधिपस्य ।
उच्चैरसालकलिकामधुपानमत्त-
पुंस्कोकिलध्वनिमिषेण ररास ढक्का ॥ ७ ॥
प्रसूनधनुरुद्वहन्कुसुमपञ्चबाणांस्तथा
विनिर्जितजगत्त्रयः कृतसहायपुष्पाकरः ।
त्वमीदृश इति स्मरक्षितिपतेः क्षितौ कूजितैः
स्तुवन्ति पिकबन्दिनस्तुहि तुहीति जानीमहे ॥ ८ ॥
अग्रे समागतवियोगिचमूसमूहा-
न्गुञ्जामिषात्कलकलेन निवारयन्तः ।
अग्रस्थपत्तय इवालिगणाः प्रयान्ति
श्रीमन्महामदनभूमिपतेर्वनेषु ॥ ९ ॥
इति वसन्तवर्णनम् ।
भृङ्गाङ्गनारवमिषाद्वनदेवताभिः
संवादितानि कुसुमानि सुपाटलानाम् ।
ग्रीष्मस्य कामपृतनाजनराष्ट्रिकस्य
शृङ्गाणि भान्ति पुरतो विपिनेषु मन्ये ॥ १० ॥
भृङ्गाङ्गनारवमिषाद्वनदेवताभि-
र्नैजास्यवायुपरिपूरणवादितानि ।
श्रीकामभूपपुरतो विपिनेषु मन्ये
सूर्याणि मल्लिकुसुमानि शुचौ विभान्ति ॥ ११ ॥
तीराधिरूढलतिकाव्रजमण्डपासु
फुल्लारविन्दमधुगन्धमनोहरासु ।
अप्रेगताधिकपरिश्रमजातखेदाः
केचिज्जनाश्च सरसीषु गता विमङ्क्तुम् ॥ १२ ॥

अथ नवघनपत्रालीविचित्रं मनोज्ञं
मधुरतरपयोभिर्वक्रपर्यन्तपूर्णम् ।
कुचयुगलमपश्यद्यत्प्रपापालिकानां
शकुनकलशयुग्मं दूरतः कामभूपः ॥ १३ ॥

पक्वाम्रसंभृतिकृतच्छदपञ्चशाखं(ख-)
युग्माञ्जलिं नवरसालवनीमपश्यत् ।
मध्येपथं नु वलिताम्वसंरक्षकस्य(?)
द्वैतीयकं शकुनमेतदनङ्गभूपः ॥ १४ ॥

इति ग्रीष्मवर्णनम् ।

असितकगलनीलश्चञ्चलाशृङ्खलोऽसौ
विशदतरबलाकालम्बिनक्षत्रमालः ।
मदजलमपि मुञ्चन्केकिनादाप्तघण्टो
द्विरद इव पयोदः शम्बरारेर्विभाति ॥ १५ ॥

चपलकनकविद्युद्वल्गया शोभितास्यः
सुरपधनुर्विचित्रीभूतपल्यायनश्च ।
समयधृतबलाकापङ्क्तिवल्गाच्छरज्जु-
स्तुरग इव पयोदः शम्बरारेर्विभाति ॥ १६ ॥

नीलाच्छाम्बरचञ्चलाञ्चललसत्सौवर्णचीनाञ्चल-
प्रादुर्भूतपयोधरा समयसन्नद्धाभ्रसंरोहिणी ।
नानावर्णसुरेन्द्रकार्मुकमहादण्डं दधाना पुरः
श्रीमत्कामनृपस्य सादरमियं वर्षानटी नृत्यति ॥ १७ ॥

विद्युत्सुवर्णकृततन्तुनिबद्धमान-
देवाधिपायुधधृतातुलवंशदण्डा ।
आसारगुच्छरुचिरां घनवादिकाख्या-
मारुह्य याति नु वियच्छिबिकामनङ्गः ॥ १८ ॥

१. 'वनिता वनरक्षकस्य' इति भवेत् मालिनीमिलर्गः. २. 'भूम्रीत्' उ. ७ इत्यु-णादिसूत्रेणोकारान्तोऽपि धनु शब्दः.

अनिलकलितचक्रः श्याममेघाश्वयुक्तः
सतततरलविद्युद्वैजयन्त्याभिरामः।
स्तनितधृतविलान्तःकालसूताधिरूढो
रथ इव च विहायः शम्बरारेर्विभाति ॥ १९ ॥

इति वर्षावर्णनम्।

नक्षत्रमौक्तिकमणालिवृतः समन्ता-
न्नीदोऽन्तरालपृथुदण्डविराजमानः।
ऊर्ध्वं शरत्समयमानवसंधृतोऽयं
कामातपत्रमिव भाति कलाधिराजः ॥ २० ॥

श्वेतोत्पलमकरगन्धवहेन गन्ध-
वाहेन पार्श्वनिकटस्थितमानवेन।
आन्दोलितं विशदनूतनकाशपुष्पं
कामस्य चामरमिवावनतं विभाति ॥ २१ ॥

मदक्षयवशादिवावगलिताच्छपुच्छव्रजं
कृतोच्चतरकंधरारुचिरनालिकाधिष्ठितम्।
घनान्तशरदन्तरासमयमानवप्रोद्धृतं
चकार शिखिनं विधिर्मदनधूम्रयन्त्रं नु किम् ॥ २२ ॥

जवजितमरुदालीशारदस्वच्छमेघ-
प्रकरखुरगरूढा भ्रूकटाक्षाचशस्त्राः।
अमरनगरनार्यः प्रौढयुद्धाश्ववारा
इव मदननृपस्यायान्ति पार्श्वे च पश्चात् ॥ २३ ॥

पृष्ठारोहितवस्त्रसव्रनिकरश्रीराजवेषोचित-
स्वच्छानेकतदायुधोज्ज्वलपरीधानांशुकग्रन्थयः।
संध्यारागकडारशारदपयोवाहव्रजाः पृष्ठतः
श्रीमत्कामनृपस्य यान्ति करभाः किं सत्वरं वेगिनः ॥ २४ ॥

इति शरद्वर्णनम्।

अग्रे तदात्वगतवाजितदश्ववार-
पाश्चात्यसादिगणवाजिखुरोद्धताशु ।
रोदोन्तरालमधिकृत्य विसर्पमाणा
धूलिच्छटेव परितः शुशुभे हिमानी ॥ २५ ॥
युद्धं गणाधिपतिनापि शिवेन कर्तु-
मासाद्य शीतगिरिदुर्गमनङ्गभूप ।
आज्ञप्तवानथ निजान्परिचारकाग्र्या-
न्सेनानिवेशनविधिं त्वरितं विधातुम् ॥ २६ ॥
रध्याविचित्रविविधाधिकवर्णशोभि
कीरालिनद्धरसनं तुहिनं विभाति ।
रोदोन्तरालमधिकृत्य दिगन्तसंस्थं
किं चीवरावरणमेतदनङ्गराज ॥ २७ ॥
अस्तोदयाद्रिशिखरोज्ज्वलकीलनद्ध-
सूर्येन्दुसान्द्रतररश्मिखुरश्मिनद्धम् ।
तारावलीसमशुक्लालिविराजमानं
कामाम्बरालयमिवाम्बरमद्य भाति ॥ २८ ॥
वायोर्निवारकदिगष्टकपर्वताच्छ-
संस्थापिताश्मकलश तुहिनैर्वपुष्मा ।
सूर्यास्तकालजनितं प्रसृतं तुषारं
किं चन्द्रिकास्तरणमेतदनङ्गराज ॥ २९ ॥

इति हेमन्तवर्णनम् ।

कर्तुं निर्जरसुन्दरीभिरमलान्कर्णावतंसान्क्षणा-
दुद्धातानि सरोरुहाणि शिशिरे जानीमहे कानिचित् ।
पानीयं सरसीषु पातुमथ तन्मङ्क्षु गते कानिचि-
च्छ्रीमत्कामनृपस्य हस्तिनिवहैरुन्मूलितानीव किम् ॥ ३० ॥
धनुस्तीक्ष्णान्बाणान्स्थितमपि निधाय स्वपुरतो
गणानामीश तं कुसुमविशिखो ज्यास्वतिनशान् ।

इतीवेयं चित्रं सकलकुसुमोत्फुल्लनमिषा-
  ल्लसन्ती कुन्दानां विपिनसरणिर्भाति शिशिरे ॥ ३१ ॥
अचपलतरभृङ्गाक्रान्तमध्यस्थभागं
  नरगस(?)नवपुष्पं भाति संमोहनाय ।
किमु नवरजताढ्यस्थालिकास्थैणनाभी-
  घुसृणजगुटिकेयं स्थापिता मन्मथाग्रे ॥ ३२ ॥
कुन्दप्रसूनकलिकाशरपञ्चकस्य
  तत्फुल्लपुष्पभरकार्मुकमाविधाय ।
श्रीमन्मनोजनृपतिर्हि मनो हरस्य
  लक्षीचकार गिरिजाभिरतं नु कर्तुम् ॥ ३३ ॥
तद्बाणविद्धहृदयः सदयं विलोक्य
  पार्श्वस्थशैलतनयाननचारुपद्मम् ।
हृष्टान्तरः स हि बभूव तथा यथाशु
  स्वार्धाङ्गभागसुहृदं किल तां चकार ॥ ३४ ॥
कुर्वते च नमस्तस्मै मन्मथाय सुराधिपः ।
ततः प्रासादमानीय पारितोषिकमादिशत् ॥ ३५ ॥
तत्पारितोषिकमसौ शिरसाभिवन्द्य
  सद्यो गृहीतविबुधाधिपसंमताज्ञः ।
गत्वा स्वकीयसदनं रतिमाविलोक्य
  हृष्टान्तरः समभवत्स मनोजभूपः ॥ ३६ ॥

इति शिशिरवर्णनम् ।

इति श्रीवाम्भवकरोपनामकश्रीकामराजदीक्षितात्मजश्रीव्रजराजदीक्षितविरचितं षडृतुवर्णनकाव्यं समाप्तम् ।

---

## श्रीसामराजदीक्षितविरचिता शृङ्गारामृतलहरी ।

सिन्धुसुताकुचकुङ्कुमपाटलवक्षःस्थलं किमपि ।
उपवीणितं न निगमैः सदाजटालं महः कलये ॥ १ ॥

नरहरिविन्दुपुरंदरजनुषा विदुषाथ सामराजेन ।
शृङ्गारामृतलहरी विरच्यते रसिकजीवातुः ॥ २ ॥

तत्र तावद्रसो विचार्यते ।

## स्थायिभावो रसः ।

ननु स्थायित्वव्यपदेशतया रसस्य नैरन्तर्यापत्तिः । मैवम् । विरुद्धाविरुद्धभावानभिभाव्यतया स्थायित्वव्यपदेशो, न तु नित्यतया ।

उक्तं च भरतेन—

'विरुद्धा अविरुद्धा वा यं तिरोधातुमक्षमाः ।
आनन्दाङ्कुरबीजोऽसौ भावः स्थायिपदास्पदम् ॥

केचित्तु स्थायिवृत्तिरूपः सूक्ष्मोऽन्तःकरणपरिणामविशेषोऽन्तःकरणात्मा धर्मधर्मिणोरभेदादित्याहुः । वस्तुतस्तु—**आनन्दरूपप्रकाशमानं स्थायिभावावच्छिन्नं चैतन्यं रसः** । स्थायिभावावच्छिन्नपदेन चित्स्वरूपं ब्रह्मैव 'रसो वै सः, रसं ह्येवायं लब्ध्वानन्दी भवति' इति श्रुतेः । आनन्दप्रकाशत्वं तु भग्नावरणत्वमिति बोध्यम् । तेनावरणसत्त्वे न रसोद्बोधः । आवरणं त्वज्ञानमेव । विषयान्तरासक्तिरिति यावत् । अत एवोक्तं 'चर्व्यमाणतैकप्राण' इति । तथा च पानकरसन्यासेन 'मुहुर्मुहुश्चर्व्यमाणो ब्रह्मानन्दास्वाद इव प्रादुर्भवन्नलौकिकचमत्कारी भग्नावरणतया स्वप्रकाशरूपो रस आविर्भवति' । चर्वणा चानन्दाभिव्यक्तिः ॥ ननु कथं विषयान्तरव्यासक्तावपि न सेति चेत् । न । विभावादिज्ञानाभावात् । अत एवोक्तम्—'विभावादिजीवितावधिः' इति । भावयति वासयति (इति) भावो वासना तेन विगलितवासनेषु न रसप्रसङ्गः । ननु चिदानन्दोद्बोधः कथमन्तःकरणवृत्तिविशेषः स्थायिभावाभिव्यक्तावेवेति चेत् । न । इदमवधेयम् । वेदान्तमते ज्ञानत्वावच्छिन्न आत्मभाननैयत्यात् काव्येऽपि 'विभावादिभिर्व्यक्तः स्थायी' । तस्यामभिव्यक्तावन्तःकरणवृत्तिरूपायामात्मापि चैतन्यानन्दस्वरूपो भासते । आत्ममनोयोगरूपात्मभानसामग्रीसत्त्वात् । तथा च पर्यवसितमेवान्तःकरणवृत्तिविशेषस्थायिभावाभिव्यक्तावानन्दरसोद्बोध इति । तत्र च विभावादिसंभेदोऽप्यावश्यकः ।

उक्तं च भरतेन।

'स्वादः काव्यार्थसंभेदो ब्रह्मानन्दसमुद्भवः' इति।

काव्यार्थौ विभावादिः, संभेदो ज्ञानम्। उक्तं च 'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' इति। तथा चालम्बनोद्दीपनभेदाद्विभावो द्विविधः। तत्रालम्बनानि ललनादीनि, उद्दीपनान्युद्यानादीनि, अनुभावाः कटाक्षादयः, व्यभिचारिणो निर्वेदादयः। अत्र केचित् 'सरलेनैव कृशोदरि विलोचनेनास्ति हस्तगा जगती। क्रूरारालेन पुनः कठिने किं काङ्क्षसे यूनाम्' इत्यादौ कटाक्षादीनामुद्दीपनत्वप्रतीतेः कथमनुभावरूपतेति चेत्, नायिकानिष्ठकटाक्षस्य नायिकानिष्ठरसेऽनुभावकतया नायकनिष्ठरसे तु तस्योद्दीपनत्वेऽपि नानुपपत्तिलेशोऽपि। रसत्वं च रसो रस इत्यनुभवसाक्षिको जातिविशेषः। स्तम्भादिकारणतावच्छेदकतया रसत्वजातिसिद्धिरित्यन्ये। आदिपदाद्भरतोक्ताः स्वेदरोमाञ्चप्रमुखा अवगन्तव्याः।

'स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः।
वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्त्विका मताः॥' इति।

ते यथा—

'रोमाञ्चः कुचयोः स्वरच्युतिरथो वाचां प्रपञ्चे पदे
स्तम्भः स्वेदपरम्परापरिचिता गण्डस्थली सुभ्रुवः।
वैवर्ण्यं वदनेऽश्रु लोचनयुगे बिम्बाधरे वेपथु-
र्मालिन्यं हृदये तदद्य विषयः प्रायो हरिर्नेत्रयोः॥'

तत्प्रत्येकोदाहरणे वेपथुस्तम्भौ यथा—

'यूयं यात पदं न याति पुरतः प्रादुर्भवत्कम्पया
वक्षोजद्वयभारखिन्नतरयाक्रान्तं भृशं जङ्घया।
आवासोऽप्यतिदूर एव जनकैर्यास्येऽहमित्येकया
तस्थे सस्मितमाकलय्य तरुणं कृशोदरे बालया॥'

'शृङ्गारवीरकरुणारौद्रहास्यभयानकाः।
बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः॥'

केचित्तु—

'नासीः खेलनरागि पीतवसने बद्धादरं शैशवे
नाभूश्चन्द्रमुखीसुखं गिरिधरे रङ्गि क्षणं यौवने ।
नादास्तान्तिमदङ्गनामचरणे बुद्धिं परं वार्द्धके
चेतश्चिन्तय चक्रपाणिचरणावन्तेऽपि खेदं जहि ॥'

इत्यादिप्रतिपाद्यो निर्वेदस्थायिकः शान्तोऽपि नवमो रस इति प्राहुः । प्रपञ्चस्तु प्रकृतेऽनुपयुक्तत्वादुपेक्ष्यः । तत्र शृङ्गारत्वं तु रतिप्रकर्षे सति रसत्वसाक्षाद्व्याप्यजातिमत्त्वम् । सत्यन्तकृत्यं स्पष्टम् । विशेष्यदलं च भावसंकरेऽतिव्याप्तिवारणाय । निरुक्तिस्तु ।

'शृङ्गं हि मन्मथोद्भेदस्तदागमनहेतुकः ।
पुरुषप्रमदाभूमिः शृङ्गार इति गीयते ॥'

स च संभोगविप्रलम्भभेदाद्विधा । संभोगलक्षणं तु विप्रलम्भभिन्नत्वे सति रतिप्रकर्षत्वम् ।

स्वरूपमुक्तं कारिकाकृता—

'अनुरक्तौ निषेवेते यत्रान्योन्यं विलासिनौ ।
दर्शनस्पर्शनाद्यैश्च संभोगोऽयमुदाहृतः ॥'

तत्र दर्शनं त्रिविधम् साक्षाच्चित्रस्वप्नभेदात् । साक्षाद्दर्शनं यथा—

'विस्रस्तनीविविशदीकृतरोमराजि
राजीवलोचनयुगं परिमीलयन्तीम् ।
बाहू मुहुर्वलितकंधरमुत्क्षिपन्तीं
शातोदरीं त्यजति न क्षणमक्षि मेऽद्य ॥'

स्पर्शनं निधुवनं यथा—

'न्युब्जीमूत' कनकशिखरी ह्लादिनी बद्धमूला
खेलत्येषा वियति विसृजत्येष ताराकदम्बम् ।
भूयः स्विन्नं गिलति तमसां वृन्दमिन्दुं सरोजे
चुम्बत्येनं कुसुमधनुषः सृष्टिरन्यापि धन्या ॥'

रतिप्रकर्षे सति इष्टानाप्तिर्विप्रलम्भः ।

तदुक्तम्—

'भावो यदा रतिर्नाम प्रकर्षमधिगच्छति ।
नाधिगच्छति चाभीष्टं विप्रलम्भस्तदोच्यते ॥'

'संभोगेऽतिव्याप्तिवारणाय विशेष्यदलं, सत्यन्तं च करुणेऽतिव्याप्तिवारणाय । वस्तुतस्तु सत्यन्तपदादानेऽपि प्राप्तियोग्यत्वस्याभीष्टविशेषणात् 'आशाबन्धः श्लथीभूतश्चिन्तादिव्यभिचारकः । विरहाकरुणाभीष्ट' इत्युक्ते करुणेऽभीष्टस्य प्राप्तियोग्यत्वाभावान्न करुणेऽतिव्याप्तिः । स च अभिलाषविरहेर्ष्याप्रवासशापहेतुकः पञ्चधा । तत्र यूनोरन्योन्यप्राप्तीच्छा अभिलाषः ।

यथा—

'दरविकसितपुण्डरीकदर्पनिबिडविडम्बनदक्षमक्षि तस्याः ।
अलसवलितमुल्लसत्प्रमोदं कथमपि मन्मथमन्थरं मयि स्यात् ॥'

देशैक्येऽपि गुर्वादिपारतन्त्र्यान्निरोधो विरहः । तज्जो यथा—

'केनापि त्वयि कारणेन सुतनोर्नोपागते देहली-
मद्यासीद्यदकाण्ड एव चरितं तस्याः किमाचक्ष्महे ।
पाटीरैर्गरलायितं सुमनसां वृन्दैः स्फुलिङ्गायितं
चन्द्रेणापि दिवाकरायितमहो हारैर्भुजङ्गायितम् ॥'

यूनोः प्रेमानुबन्धाद्विनाकारणं कोप ईर्ष्या स च मानः ।

'अस्तग्रस्तो गगनसरसीसारसः शीतरश्मि-
स्तारा हारा अपि विगलिताः कण्ठतो यामवत्याः ।
जज्ञे चैतन्मुचिरिपुदिक्चुम्बि मार्तण्डबिम्बं
मानग्रन्थिस्तदपि यतते त्वां न मोक्तुं कृशाङ्गि ॥'

प्रवासो देशान्तरस्थितिस्तद्धेतुको यथा—

'चैत्रे नेत्रे वितरति रुजं कन्दली भूरुहाणां
सूचीवेधं श्रवसि तनुते काकली कोकिलानाम् ।
सेर्ष्यं कार्श्यं दिशति विशिखैः पञ्चभिः पुष्पधन्वा
तन्व्यास्तापं सृजति बिसिनीपत्रपर्यङ्कशय्या ॥'

शापो मुन्यादिकोपस्तद्धेतुको यथा कालिदासस्य—'त्वामालिख्येत्यादि ।'

तत्र शृङ्गारस्य प्रथमगणितत्वात्तदालम्बनभूतत्वान्नायका निरूप्यन्ते । ननु शृङ्गारस्य कथं प्राथमिकत्वमिति चेत् न । 'शृङ्गारवीरकरुण' इत्यादि भरतोक्तेरिति गृहाण । न च तेनोक्तं कथमस्य तत्त्वं वैपरीत्ये किं नियामकमिति वाच्यम् । निखिलादिभूतस्य तत्रभगवतो विष्णोरस्याधिदैवतत्वात् । ननु तदालम्बनभूतत्वं तु नायिकानामपि; तत्कुत एतेषामादावभिधानमिति चेत् न । सूचीकटाहन्यायेन तेषां प्रथमनिरूपणेऽपि न क्षतिः । ते तु त्रिविधाः पत्युपपतिवैशिकभेदात् । तत्र विधिवत्पाणिग्राहित्वे सति प्रेमवान्पतिः । सत्यन्तकृत्यं स्पष्टम् । विधिवत्पाणिग्राहिणि परमहिलासक्ते चोपपतावतिव्याप्तिनिरासाय विशेष्यदलम् । अनारतपरदारविहारी उपपतिः । बहुलवेश्योपभोगनिरतो वैशिकः ।

क्रमेणोदाहरणानि—

'चण्डं चण्डगभस्ते मा किर किरणं समीर चर मन्दम् ।
गन्तुं हतकेन मया समं कृशाङ्गी समीहते विपिनम् ॥'

'सुपितरदपदं नकारशोभि श्लथकुसुमाकुलकुन्तलं नितान्तम् ।
प्रणयभयविलोललोचनान्तं पुरसुदृशां परिचुम्बनं समीहे ॥'

'मन्दाक्षावरणव्ययप्रकटितप्रेमप्रपञ्चं मदा-
घूर्णल्लोचनमुन्मदस्तनतटं साटोपहासं मुहुः ।
आशासे स्फुटहावभावमधुरं हालाविलासस्फुर-
द्वाक्यं वारमृगीदृशां प्रतिदिनं रम्यं परीरम्भणम् ॥'

तेतु प्रत्येकमनुकूलशठधृष्टदक्षिणभेदाच्चतुर्धा । परंतु पत्यावनुकूलस्योपपतौ शठत्वस्य वैशिके शठत्वादीनां नैयत्यमितरेषां गौणता । तत्र नायिकानुरक्तो नायक अनुकूलः । यथा—

'तनवै नलिनीदलैः समीरं............................... ।
रचये निचयेन पल्लवानां हिमकल्पं तव किं कृशाङ्गि तल्पम् ॥'

कामिनीविषयककपटपटुः शठः ।

यथा—

'एतत्ते हृदि लक्ष्म सुन्दरि भृशं सामुद्रिकं दृश्यते
श्रेयोऽह्नाय किमप्यनेन भविता वामाक्षि संलक्ष्यते।
धूर्तः पाणितलेन पङ्कजदृशो वक्षःस्थलीमामृशन्
साकूतं मुषितस्मितं कुचतटीमामर्दयंस्तुष्यति ॥'

तर्जनेऽपि प्रश्रयवान्धृष्टः। तदुक्तम्—

'कृतागा अपि निःशङ्कस्तर्जितोऽपि न लज्जितः।
भूयः प्रश्रयवानेति धृष्टः स परिकीर्तितः ॥'

यथा—

'निषिद्धोऽसौ चाभिर्गरलकलुषाभिः सखि मुहु-
र्मुहुर्दृष्टः कोपारुणतरलया हन्त कुदृशा।
पराचीभूतायाः शिथिलयति बन्धं मम पुन-
र्विविक्तं कञ्चुक्याः किमथ करवै धृष्टतरुणैः(णः) ॥'

सकलमहिलासमरागो दक्षिणः। तदुक्तम्—

'सर्वासां नायिकानां यः समरागः स दक्षिणः'।

यथा—

'एकां चुम्बत्येकां श्लिष्यत्यपरां प्रसाधयत्यन्याम्।
रमयति समानरागो रासरसे गोपिकारमणः ॥'

चतुरमानिनोः शठ एवान्तर्भावः। तत्र वचनचेष्टाव्यङ्ग्यवृत्तिभेदादाद्यो द्विधा। वचनव्यङ्ग्यवृत्तान्तो यथा—

'अटवीमटवीं निशासु यान्त्यास्तटवीचीलुलितां कलिन्दसूनोः।
तव सुन्दरि संगचारिणा वा भवितव्यं सुकृतेन कस्य पुंसः ॥'

द्वितीयो यथा—

'वितन्वाने रदपदं नवे माकन्दपल्लवे।
कान्ते हरिणशावाक्षी निनिन्द करमालिनम् ॥'

मानी यथा—

'अपसर मम न स्पृशेः शरीरं प्रणयरुषा ननु भाषिते मयैतत्।
शिवशिव शिबिरं विहाय यातः कथयस किं करवाणि जीवितेशः॥'

एते चोत्तममध्यमाधमभेदात्रिधा। यत्तूत्तमत्वादयो भेदा वैशिकस्यैव नेतरयोरित्याहुः। तन्न मनोहरम्। उत्तमत्वादिकं तु विजातीयचेष्टानिबन्धनम्। तस्याश्च सर्वसाधारणत्वमपि वक्तुं युक्तम्। न च चेष्टायां वैजात्यविशेषणे गौरवमिति वाच्यम्। तस्य प्रामाणिकत्वादित्यनवद्यम्। तत्र कोपशीलायामपि प्रियायामनुरागयुत्तमः। कोपशीलायां प्रियायां दूरत एव मनोभावग्राही मध्यमः। कामकेलिषु कृपाहीनोऽधमः।

तत्राद्यो यथा—

'शोणः कोणस्तव नयनयोर्वाक्प्रपञ्चः समुद्रो
भीमा भ्रूस्ते तदपि तनुषे तापमापत्सरूपम्।
भूयो भूयाः सखि मम तनोर्बाहुदा तापशान्त्यै
प्रीत्यै तेऽहं सुमुखि रचये मौक्तिकीं हारयष्टिम्॥'

मध्यमो यथा—

'यद्यपि मुषितविलासं वदनं नयनं च शोणमलसाक्ष्याः।
मकरी कुचयोः कबरीधूपः सायं विलोक्यते तदपि॥'

अधमो यथा—

'शिरीषसुकुमारीं मां कृत्याकृत्यमजानतः।
नलिनीं कुञ्जरस्येव कथं पातयसे करे॥'

एते च त्रयः प्रोषिता भवन्ति।

पतिः प्रोषितो यथा—

'दोलायितश्रवणकुण्डलयुग्मबन्ध-
गण्डस्थलीलुलितकुन्तलघर्मबिन्दोः।
हारालिवेल्लितनताभिहतोदरायाः
किंचित्स्मरामि मृगशावकलोचनायाः॥'

उपपतिः प्रोषितो यथा—

'लीलाभिरुल्लिखति जातु मयि स्तनाङ्क-
मम्भोजसुन्दरमुखी सनिषेधभीतिः ।
हन्ताद्य तत्स्मरति दग्धमनः सहास-
कोपत्रुटद्भ्रुकुटि यज्जलजैर्जघान ॥'

वैशिकः प्रोषितो यथा—

'मदिरामधुरामोदाधरपानरसालसाम् ।
कदा मदागमोत्तुङ्गस्तनीं लप्स्येऽहमङ्गनाम् ॥'

अनभिज्ञो नायको नायकाभास एव ।

स यथा—

'साकूतस्मितगण्डशोभि मुदितप्रेमप्रपञ्चं मुहुः
शून्ये सद्मनि पद्मपत्रसुदृशा भूयो दृशाभीक्षितः ।
स्वैरं चोल्लिखितो नखैः शरसखैर्देवस्य चेतोभुवो
मातः किं करवै न वेत्ति नृपशुस्तैस्तैरनङ्गेङ्गितैः ॥'

केचित्त्वनुकूलस्यापि विक्रमादेर्दाक्षिण्यदर्शनाद्दक्षिणत्वेनापि स्थितस्य कृष्णादेः शठत्वदर्शनादानुकूल्यादयोऽवस्था एव न स्वभाव इत्याहुः । नैतत् । अन्यसंभोगचिह्नितत्वादिधर्माणां योषितामुद्भावने रसाभासापत्तेर्दुर्वारत्वात्त नायकेष्वष्टविधभेदाक्षेपः । अनुकूलत्वादिना नायकभेदाद्विशेष इति । यत्तु मच्छन्नप्रकाशभेदादेतेषां द्वैविध्यमूचुस्तवेतदानुकूल्यमन्यत्र प्रच्छन्नमिति संगमनीयम् । एते च दिव्यादिव्यदिव्यादिव्यभेदात्त्रिविधाः । दिव्याः शंकरादयः, अदिव्या अर्जुनादयः, दिव्यादिव्याः कृष्णादयः । तेषां च नर्मसचिवा विटचेटविदूषकाद्या ज्ञेयाः । उक्तं च—

'शृङ्गारेऽस्य सहाया विटचेटविदूषकाद्याः स्युः ।
भक्ता नर्मसु निपुणाः कुपितवधूमानभञ्जनाः शुद्धाः ।' इति ।

यद्यप्येतेन पीठमर्दः शृङ्गारे सचिवः कुपितवधूप्रसाधकश्चेत्युक्तं कैश्चित् । तत्पराम्नम् । तथापि प्राचां लेखानुरोधाद्दर्श्यते । आदिपदान्मालाकारताम्बू-

लिकादयः । तत्र कुपितस्त्रीप्रसाधकः पीठमर्दः । कामतन्त्रकलाकोविदो विटः । यूनोः संधानकरश्चेटः । विकृतवचनाद्यैर्हास्यकारी विदूषकः । मालाकारताम्बूलिकौ प्रसिद्धौ । क्रमेणोदाहरणानि—

'जहिहि सुतनु मौनमस्तु मुद्रा ननु कलकण्ठकुटुम्बिनीमुखेषु ।
अयमपि लभतां विलोचनान्तःस्रवदमृतद्रवनिर्भराभिषेकम् ॥'

'धीरं धीरं वहति सुतनो मारुतो दाक्षिणात्य-
श्चापं धुन्वत्यलिकुलरुतैर्हुंकृतैः पुष्पधन्वा ।
डिण्डीघोषं रचयति पिकः शोधयन्मानिनीनां
चेतः स्थास्नुः क्षणमपि कथं मानसे मानबन्धः ॥'

'शून्ये सुपर्वसद्मनि मेलितयोर्वीक्ष्य वदनमथ यूनोः ।
यातं कुसुमानयनच्छलेन सहसा सहचरेण ॥'

'सद्यः शारदशर्वरीश्वरमुखीमानीय तल्पान्तिकं
तैस्तैर्मन्मथचेष्टितैर्नरपतिर्यावक्षिनीषुः क्षपाम् ।
अब्रह्मण्यमिति श्रुते स चकितं कौक्षेयहस्तोऽभ्यगा—
त्किं किं वेत्ति विदूषकेण भणितं यान्छाम्यहं मोदकान् ॥'

अथ नायकोपाचरणवृत्तयः ।

'तद्व्यापारात्मिका वृत्तिश्चतुर्धा परिकीर्तिता ।
कौशिक्यारभटी चैव भारती सात्वती तथा ॥'

तत्र कौशिकीस्वरूपं तु 'गीतनृत्यविलासाद्यैर्मृदुः शृङ्गारचेष्टितैः' । करणे तृतीया । तथा च मृदुपदेन संबन्धाच्छृङ्गारप्रधानेत्यर्थोऽवगम्यते । तृतीया चोपलक्षणम् । तथा च शृङ्गारचेष्टितोपलक्षितेत्यर्थ इति केचित् । तन्न । उपलक्षितस्य व्यर्थत्वात् । सा च 'नर्मतः स्फुञ्जतः स्फोटतद्गर्भैश्चतुरङ्गिका' । चतुर्विधेत्यर्थः । तत्र स्फुञ्जो नर्मस्फुञ्जः एवमग्रेऽपि । विदग्धक्रीडनं नर्म-मिथोपच्छन्दनार्थकम् । प्रियावशीकरणफलकमित्यर्थः । तत्त्रिधा । शुद्धस-शृङ्गारसभयसहास्यभेदात् । क्रमेणोदाहरणानि—

१. 'धूनोति' इति भवेत् ।

'करवाणि वरोरु यत्नतो मृगनाभीतिलकं तवालिके ।
उदयं क्षितिमण्डले यथा मिहिकांशोर्मनुते जनः क्षणम् ॥'

'मकरीमिषेण तस्याः कपोलफलकेऽलिखन्मुखं नैजम् ।
अभिदर्शयंश्च मुकुरे जहास शनकैर्युवा कश्चित् ॥'

'पातुं षट्पदतरुणस्त्वदधरमम्भोजलोचने भ्रमति ।
इति भीता मुहुरबला सहासमालिङ्गयत्कान्तम् ॥'

तत्र शुद्धस्य भेदाभावात्सश्रृङ्गारस्य भेदमाह—आत्मोपक्षेपसंभोगमानैः श्रृङ्गार्यपि त्रिधा। श्रृङ्गारि(रं) श्रृङ्गारहास्यमित्यर्थः। स्वानुरागमात्रनिवेदकं, संभोगेच्छानिवेदकं, माननिवेदकं चेति त्रिधा।

'नर्मस्फुञ्जः सुखारम्भो भयतो नवसंगमे ।
नर्मस्फोटः स्वभावानां सूचकोऽल्परसोत्सवैः ॥'

'छिन्ननेत्रपरिवारि नर्मगर्भोऽर्थहेतवे ।
अङ्गैः सहास्यनिर्हास्यैरेभिरेषा त्रिकौशिकी ॥'

नर्मभेदाः सहास्या इतरे निर्हास्या इत्यर्थः। एतैरङ्गैरुपलक्षिता कौशिकीति भावः। एतदुदाहरणानि काव्यनाटकादिषु वेदितव्यानि। इह प्रपञ्चभयान्नोदाहृतानि। इति कौशिकी।

सात्वत्यादीनां तु वीराद्युपयोगित्वान्नेह वर्णनमुचितमिति ता उपेक्षिताः।

अथ श्रृङ्गारस्योभयनिष्ठत्वे नायिकाप्रपञ्चो रच्यते। तल्लक्षणं तु कामवत्त्वम्। न च मुग्धायामव्याप्तिः। भीतेः सुरतमातिकूल्येऽपि कामसत्त्वात्। एतेन अज्ञातयौवनां मुग्धाभेदं वदतो भानुकरस्य लेखः परास्तः। कामासत्त्वे नायिकत्वापत्त्या कामसत्त्वेऽज्ञातयौवनात्वव्याघातादुभयतःपाशारज्जोर्दुर्वारत्वात्। वस्तुतस्तु कामिमनोवृत्तिविहाराश्रयित्वमिति लक्षणे न दोष गन्ध इति सुस्थम्। सा तु त्रिधा। स्वीया, परकीया, सामान्यवनिता चेति। तत्र पतिभिन्नानुरक्ता स्वीया । यत्तु शीलादिमत्त्वमेव लक्षणमातन्वते। तन्न। बोधानुबन्धि स्वीयाया अधीरत्वानापत्तेः। अस्याः पतिपरिचर्यापरपुरुषानिरीक्षणादयश्चेष्टाः।

यथा—

'यातायातकुतूहले नयनयोः सीमानमातन्वता
नेत्रान्तं मधुरस्मितेऽधरतलं वाचि प्रियस्य श्रुतिम् ।
चित्तस्यापि गतागतेषु विधिना कान्तप्रतीकावलीं
मन्दाक्षप्रसरे कुलाम्बुजदृशां नाकारि सीमा कुतः ॥'

सा त्रिविधा । मुग्धा, मध्या, प्रगल्भा चेति । स्वीयाया एव त्रैविध्यदर्शनात्परकीयासामान्यवनिते न मुग्धे, किंतूभयविधे एवेति सूचितम् । अदश्च संजाघटीति गुणानुरागाद्द्रव्यलोभाद्वा न भवति मुग्धाया [न च वयःकामाया] अन्यत्रानुरागः । न च शकुन्तलादीनां विवाहात्प्राक् परकीयाणामप्यनुरागदर्शनात्तत्रापि मुग्धात्वस्वीकार आवश्यक इति वाच्यम् । शकुन्तलादीनामुदितयौवनानां मध्यात्वमेव न तु मुग्धात्वम्, सुयोगं विनासिकालेन तस्यापगमात् । तत्र प्रथममवतीर्णनवयौवना मुग्धा । सा च ज्ञातयौवनाज्ञातयौवनभेदाद्द्विधा । एषैव नवोढेत्युच्यते । विश्रब्धनवोढा तु मध्यैवेत्येके । मुग्धाया आद्यावस्था नवोढा दरविश्रब्धा मुग्धैव विश्रब्धनवोढेत्यन्ये । अस्याश्च रतिवामत्वकोपमृदुत्वादयश्चेष्टाः क्रमेणोदाहरणानि । यथा—

'रोमालीवेभ(त्र)धारी प्रथममथ वयो मङ्गलाशंसि कुम्भ-
द्वन्द्वं वक्षोजरूपं मदननरपतेर्हन्त जैत्रस्य यातम् ।
अद्य श्वो वा सुकेश्याः स्वयमपि च पदं मीनकेतुः शरीरे
कर्तेत्युत्प्रेक्ष्य भूयो भयचकितमितः शैशवं गन्तुमीहे(मैच्छत्)॥'

अपि च—

'दृष्टिः शान्तमपाङ्गमेत्य नितरामारात्परावर्तते
द्वित्राण्येव पदानि हन्त तरलं मन्दं पुनर्गच्छति ।
यूनां धैर्यपयोनिधेश्चुलकने कुम्भोद्भवा काप्यसौ
स्वल्पैरेव दिनैर्दशा वरतनोरन्या वरीवर्तते ॥'

'वृद्धिं याति नितम्बो जठरं तनुतामुपैति किं करवै ।
उद्भूनं मम हृदयं देहि किमप्यौषधं मातः ॥'

'(परि)पश्यति हृदि भूयो जीवातुं प्राणनाथस्य ।
कुचयुग्ममम्बुजाक्षी निधिमिव लब्धं दरिद्रजनः ॥'
'हस्ते धृता(न)श्चयति प्रतीकान्पृष्टा कथंचिन्न ददाति वाचः ।
मन्दाक्षभीतिप्रचुरा नताङ्गी नाङ्गीकरोति प्रियचेष्टितानि ॥'
'विश्वासभीतिचञ्चलमञ्चलमक्ष्णः प्रिये तनोत्येकम् ।
अपरं लीलालुलितं कृत्रिमपुत्रे मृगीनयना ॥'

समानलज्जामदना मध्या । सा चोद्यतयौवना । तस्याश्च धैर्ये वक्रोक्तिरधैर्ये परुषवागित्यादयश्चेष्टाः ।

यथा—

'कामः प्रेरयति प्रिये प्रणयिनीं दृष्टिं परं पक्ष्मलां
व्रीडा वारयति व्रजत्यथ वचः कामाज्ञया वल्लभम् ।
लज्जाखण्डितमेति तत्र वदनात्कन्दर्पमन्दाक्षयो-
र्वैषम्ये सति रङ्कुशावकदृशोर्दोलायतीवान्तरम् ॥'

पतिगात्रानुरक्ता सती विविधकलाकलापकोविदा प्रगल्भा । सत्यन्तं सामान्यवनितायामतिव्याप्तिनिरासाय विशेष्यदलदानान्न मध्यायामतिव्याप्तिः । अस्याश्च रतिप्रीतिरानन्दात्संमोहः ।

आद्या यथा—

'कृत्वा कामं सुरतमहोत्साहं तं प्रेयांसं सा जिगमिषुमाराद्प्रातः ।
बाला भूयो वलयितबाहुक्रोडे धृत्वास्वाप्सीन्मुकुलितनेत्रा जोषम् ॥'

द्वितीया यथा—

'रचितविविधकाकूक्तिप्रचारे पुरस्ता-
त्प्रणयिनि सखि धन्या मानभाजः पुरन्ध्र्यः ।
स्पृशति मम तु नीवीं नैव जाने स्वमस्मि-
न्न च मनसिजकेलिं न प्रियं किं करोमि ॥'

मुग्धाया अत्यन्तं मानासत्त्वेन लज्जाप्राधान्येन च वक्रोक्त्यादेरसंभवात्प्रत्येकमवस्थायां मध्याप्रगल्भे त्रिविधे । धीराधीराधीराधीरा चेति । व्यङ्ग्यवक्रोपप्रकाशा धीरा । अव्यङ्ग्यवक्रोपप्रकाशाधीरा । व्यङ्ग्याव्यङ्ग्यवक्रोपप्रकाशा

धीराधीरा । मध्याधीरायास्तु कोपस्य वक्रोक्तिर्व्यञ्जिका । अधीरायाः परुषवाक् । धीराधीरायाश्च वचनरुदिते कोपस्य प्रकाशके । प्रौढाधीराया रतौदास्यम् । अधीरायास्तर्जनताडनादि । धीराधीरायास्तु तदुभयं कोपस्य व्यञ्जकमिति दिक् । धीरादिभेदाः स्वीयाया एव न परकीयाया इति प्राचीनाः । न च धीरादिभेदानां माननियतत्वात्परकीयास्वपि तत्संभवात्संभव इति वाच्यम् । *गुणानुरागद्रव्यलोभादनुरक्तयोः परकीयासामान्यवनितयोर्मानासंभवान्न* धीरादिभेदास्तयोः । जातस्यापि मानस्य प्रणयनाशफलत्वेन दुःसाध्यत्वाद्रसाभासोऽनुभवसिद्ध एवेति संप्रदायविदः ।

मध्या धीरा यथा—

'परिचितमिप(क्वच)[कृकृत्य]स्यालं मधौ मदनाशुगे-
मुपति सुदृशां मानं वासन्तिकापरिमोदिते ।
दयित भवतः क्षुण्णाङ्गस्यापि केतककण्टकै-
र्भ्रमणमुचितं श्वासोत्कम्पाधरस्य वनालिषु ॥'

मध्याधीरा यथा—

'दग्ध्वा नयने भूयः कुलटायाः कितव नखराङ्कैः ।
विकटैरदितैर्विट किं निर्दय हृदयं ममादहसि ॥'

मध्या धीराधीरा यथा—

'कान्त भाग्यवतां वक्षो यक्षकर्दममर्दितम् ।
इत्युदीर्य दधौ बाला दृशं बाष्पतरङ्गिणीम् ॥'

प्रौढा धीरा यथा—

'नोरीकरोषि नयनाञ्चलतोऽपि तल्प-
मद्यास्ति ते मुषितहास्यमिहास्यपद्मम् ।
नैनं मुजिप्यमुररीकुरुषे कृशाङ्गि
वाचापि साचिमुखि कोपविधिः क एषः ॥'

प्रौढाधीरा यथा—

'समीक्ष्य लाक्षारसभावितङ्गं कर्णान्तविश्रान्तविलोचना माम् ।
अमर्त्सयच्चञ्चलतारकेण महारमरश्मिच्छुरिणा करेण ॥'

प्रौढा धीराधीरा यथा—

'मयि काकुवाचि सुदती समुल्लसत्स्मितशोभिगण्डयुगलाभवत्क्षणम् ।
अथ तल्पभाजि नवविद्रुमस्रवत्तटिनीसरोजसदृशं दृशं दधौ ॥'

एते च धीरादिषड्भेदा ज्येष्ठाकनिष्ठाभेदाद्द्विधा । परिणीतत्वे सति भर्तुरधिकस्नेहा ज्येष्ठा । परिणीतत्वे सति भर्तुर्न्यूनस्नेहा कनिष्ठा । अन्ये तु मुग्धाया नेमौ भेदाविति जल्पन्ति । तत्र मन्यामहे । ज्येष्ठत्वकनिष्ठत्वे च नायकाधिकन्यूनस्नेहनिबन्धने; ते च न मुग्धायामिति वक्तुमशक्यत्वात् । ननूपक्रमोपसंहारविरोधः । उक्तयुक्त्या मुग्धायां मानस्य खण्डितत्वेन धीरत्वाद्यसंभवात, एतेषामेव च षण्णां ज्येष्ठत्वादिभेदभेद्यत्वान्न तस्यां तत्संभवः । न च ज्येष्ठत्वादिकं न धीरादिनियतं किंतु भर्तृप्रतियोगिकाधिकन्यूनस्नेहनिबन्धनमित्युक्तमिति वाच्यम् । एते च षडिति लेखनवैयर्थ्यापत्तेरिति चेत् । न । धीरत्वादिकमवस्था स्वभावो वा । नान्त्यः । माननियतत्वानापत्तेः, मुग्धायां तत्संभवापत्तेश्च । आद्य इष्टापत्तेः । न च ज्येष्ठात्वकनिष्ठात्वयोरवस्थाने एकस्या एव तत्तत्कालोपाधित्वेन तत्तच्चेष्टाश्रयत्वेन च तन्निमित्तीभूतभर्तृनिष्ठक्रियाजन्यत्वेन च खण्डितात्वविप्रलब्धात्वकलहान्तरि[ता]त्वादीनि यथा तथा एकस्या एव ज्येष्ठत्वकनिष्ठत्वापत्तिरिति वाच्यम् । ज्येष्ठत्वादेस्तथात्वस्य भर्तृप्रतियोगिकाधिकन्यूनस्नेहनिबन्धनत्वेनेष्टत्वात् । न चैवमेते च षडिति लेखनवैयर्थ्यमिति वाच्यम्; धीरादिषट्त्वस्याविवक्षितत्वात् । यद्वा चकारो भिन्नक्रमस्तेनैते धीरादि षट् मुग्धाभेदाश्चेति । तथा च जृम्भते मुग्धायामपि ज्येष्ठात्वकनिष्ठात्वविलसितमिति संक्षेपः । इतरे तु उक्तभेदानां प्रच्छन्नप्रकाशभेदाद्वैविध्यमूचिरे । तन्न सुन्दरम्; प्रच्छन्नस्वीयेत्यादिवाक्यस्य दुर्बलत्वात्, धीरादिषु धीरत्वादिभेदातिरेकेण प्रच्छन्नत्वादिभेदासंभवाच्च । क्रमेणोदाहरणानि यथा—

'एकत्र स्थितयोस्तयोः कलयतोः क्रीडां सरोजेस्थयोः(?)
स्वैरं स्वैरमुपेत्य कोऽपि तरुणो लीलावतामग्रणीः ।

१. 'सरोजस्थले' इति स्यात्.

एकस्या वदने निधाय वसनं हेलामिपात्सादरं
धन्या चुम्बति शारदेन्दुवदनामन्यां मुहुर्नागर ॥'
'अङ्गाङ्गानि ममासि शारदनिशानाथानने किं रुपा
त्वं मे कण्ठचरा सुधाधरतले प्राणा क्षुधा किं सुधा ।
इत्थ मन्मथकेलिशैलभवनेनाहूय कंसारिणा
नीते कोपकषायिते प्रियतमे स्मित्वा प्रमोदास्पदम् ॥'
'मेदिन्या निपतितमङ्गनामथैका
प्राणेशोऽवचितुमयोजयत्प्रसूनम् ।
चूडाग्रस्थितकुसुमोच्चिचीपुमन्या-
मालम्ब्यन्वलयितबाहुरालिलिङ्ग ॥'

गूढपरपुरुषानुरागा परकीया । गूढपददानान्न वेश्यायामतिव्याप्ति । सा द्विधा परोढा कन्यका च । परकीयात्व पराधीनत्वम् । तेन न कन्यायामव्याप्ति, तस्याश्च पित्रधीनत्वात् । ननु दमयन्त्यादे पुरा परकीयात्वे पुनश्च स्वीयात्वे स्वीया परकीयेति भेदवैषम्यापत्तिरिति चेत् । न । प्रधानापकर्षेण काव्यनाटकादौ प्रधानरसे परोढानिनन्धनत्वस्यानुचितत्वात् । तदुक्तम्—'नान्योढाङ्गिरसे क्वचित् ।' न चैतद्भेदकथनवैयर्थ्यमिति वाच्यम् । 'कामकलाशिक्षायै स्वरक्षायै चारोहति मदने यायात्परयोषितम् ।' इति कामशास्त्रानुरोधेन तद्वर्णनसंभवादिति सक्षेप ।

परोढा यथा—
'अद्याकारि विलोचनातिथिरसौ दामोदर सुन्दर-
स्तिग्मद्योतिसुतातटे विरचयन्वंशीम्वन मोहनम् ।
तेनानङ्गतरङ्गितानि निभृत कुञ्जोदरे वीरुधा-
मीहे किं करवाणि हा परवशा सृष्टिं विधाता व्यधात् ॥'

कन्या यथा—
'तपस्या कस्यासीत्परिणतवती कस्य भगवा-
ननङ्ग सतुष्ट सुकृतविटपी कस्य फलित ।

---
१ अपीनि युक्त प्रतिभाति

इयं यस्मै वत्सा[प्रस्ता]रितकमललोलालिसदृशा
दृशा भूयो भूयः स्पृहयति धरित्रीशतनया ॥'

गुप्ताविदग्धालक्षितामुदिताकुलटानुशयानानां परकीयायामेवान्तर्भावः। गुप्ता द्विविधा। वृत्तसुरतगोपना वर्तिष्यमाणसुरतगोपना चेति। वृत्तसुरतगोपनत्ववर्तिष्यमाणसुरतगोपनत्वयोर्धर्मयोरेकत्वासंभवान्न त्रैविध्यम्।

गुप्ता यथा—

'निन्दन्तु प्रतिवेशिनो मम जनाः श्वश्रूश्चिरं कुप्यतां
नाहं भानुसुतातटे सखि पुनर्यास्ये वतैकाकिनी।
बन्धूकप्रसवप्रकाममधुरच्छाये मदीयाधरे
भ्रामंभ्राममसौ न कृष्णमधुपः कां कां व्यधाद्वा विधाम् ॥'

द्वितीया यथा—

'शैवलपिच्छिलदृषदं मामेव प्रेषयत्यसौ वापीम्।
भङ्क्ष्यति मे वलयाली प्रतिवेशिनि साक्षिणी भूयाः ॥'

विदग्धा द्विविधा—क्रियाविदग्धा वाग्विदग्धा चेति।

क्रियाविदग्धा यथा—

'जिगमिषति प्राघुणिके द्वित्राः स्थित्वा कथंचिदिह रात्रीः।
मार्जारमस्य मार्गे मुमोच निभृतं कुरङ्गाक्षी ॥'

वाग्विदग्धा यथा—

'प्रसरति बहु झञ्झामारुतश्चारु तोयं
कलयति जलवाहः पान्थ किं माह गत्यै।
गमय गतसमीरे निर्गताम्भःप्रचारे
रुचिरतरमगारे ध्वान्तमिश्रां तमिस्रा[स्रा]म् ॥'

लक्षिता यथा—

'निद्रातु जह्नुतनया तटकुञ्जवृत्तं
वृत्तान्तमम्बुजमुखी निभृतं सखीषु।
आसार्ततोषपरिवर्तितचित्तवृत्ति-
रस्यास्तनोति विशदानि विचेष्टितानि ॥'

मुदिता यथा—

'याता याता जनकभवनं श्रीपतेरुत्सवार्थी
प्राणिग्राही क्वचिदपि गतो देवरः काप्युपेतः ।
श्रुत्वा सुभ्रूः परिजनमुखादेतदब्जायताक्षी
रोमाञ्चानां कुचकलशयोः कञ्चुकं संचकार ॥'

कुलटा यथा—

'नाकार्षीः कुलटाजनस्य मदनक्रीडासु दन्तावला-
नुन्मत्तांस्तु तुरङ्गमानपि कथं हा हन्त नैवाकरोः ।
त्रैलोक्यस्थितपूरुषानपि ममाभाग्येन नाचीकरः
किं धातः करवाणि कस्य कथये व्यर्था अनिर्मेऽजनि ॥'

वर्तमानस्थानविघटनेन भाविस्थानाशङ्कया स्थानधिष्ठितस्थानस्य भर्तुर-धिष्ठानेनानुशयाना भवति ।

प्रत्येकमुदाहृतयो यथा—

'नीते हालिकसार्थेऽश्वरमावस्थां शनैश्च शणवाटे ।
जाता पलाण्डुपाण्डुस्तस्या गण्डस्थली सुतनोः ॥'

'गोदावरीतटनिविष्टविलोलनेत्रे
खेदैरलं कलय नाथगृहे निवासम् ।
तत्रापि पत्रचयचर्चितवल्लिवेलं
वेश्मानि सन्ति न कृशोदरि वा कियन्ति ॥'

'उड्डीनकारण्डवचक्रवाककोलाहलाकर्णनतः कृशाङ्ग्याः ।
मार्तण्डरश्मिग्लपितेन्दुबिम्बशोभाममुष्या वदनं बभार ॥'

वस्तुतस्तुस्त्वेते भेदाः परकीयाया एव; न स्वीयाया इत्यप्रयोजकमेव; अविशेषात् । निमित्ताभावस्य शपथानिर्णेयत्वं तु कुलटात्वं निमित्ताभावादेव न भवतीति दिक्(?) । वि(त्तमात्रो)[त्तो]पाधिकसकलपुरुषानुरागा सामान्यव-निता । वित्तमात्रोपाधिरिति तु संपातपाती लेखः । वसन्तसेनाकामकन्दला-

१. 'भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम्' इति कोष.

देर्वित्तमात्रोपाधिं विनाप्यनुरागदर्शनात् । तथा च कचिद्वित्तोपाधिको रागः कचिच्च कामुकत्वादिति दोषः । तदुक्तम्—'वित्तमात्रं समालोक्य सा रागं दर्शयेद्बहिः' । तथा—'एषापि मदनायत्ता कापि स्यादनुरागिणी' इति । अग्निमित्रेऽनुरक्तायामैरावत्यां नाव्याप्तिशङ्कापि; वित्तोपाधेः सत्वात् । वस्तुतस्तु प्रकटसकलपुरुषानुरागित्वमेव लक्षणम् । वित्तोपाधिककामित्वादिकं तु स्वरूपकथनम् । अतएव न कुलटायाः सामान्यवनितायामन्तर्भावः । एतेन वेश्याया रसालम्बनाभावतया शृङ्गारा(ना)लम्बनत्वेन नायिका निरूप्यते सा त्रिविधेति भानुकरः प्रत्युक्त इत्युच्छृङ्खलल्लेखः परास्तस्तस्यासत्वेऽनायिकत्वापत्तेः । न चेष्टापत्तिः; कामिमनोवृत्तिविहाराश्रयित्वस्य लक्षणस्य सत्वात्, नायिकात्वेन महाकविभिर्व्यपदिश्यमानत्वाच्च । सा यथा—

'एकं चुम्बितुमीहते पुरवधूर(न्यां)[न्यं] समालिङ्गितुं
(केचि)[किंचि]न्मज्जयति प्रसह्य मदनक्रीडासुधावीचिषु ।
साकूतस्मितशोभिगण्डमपरं भूयः समुद्वीक्षते
कं कं नाम नरं न रञ्जयति वा चामीकरालिप्सया ॥'

एता अन्यसंभोगदुःखिता वक्रोक्तिगर्विता मानवत्यश्चेति तिस्रो भवन्ति । प्रेमगर्वितायाः वक्रोक्तिगर्वितायामन्तर्भावान्न चतुर्विधत्वम् । अन्यसंभोगदुःखितत्ववक्रोक्तिगर्वितत्वयोर्धर्मयोः सर्वत्र संभवः । परकीयासामान्यवनितयोरुक्तयुक्त्या मानासंभवान्मान[वत् ]त्वं स्वीयाया एवेति तत्त्वदर्शिनः ।

अन्यसंभोगदुःखिता यथा—

'यातायास्तव केतकीवनपथाच्छिन्ना तनुः कण्टकैः
प्रायो नीचतरस्य माननविधावाम्रघ्नरागोऽधरः ।
उत्कीर्णः कबरीभरोऽस्य पदयोर्मौलौ [र्मु]मुहुर्लोलनात्
खेदं नो[द्वि]ह तिष्ठ नागमदसौ चेन्मा व्यलीकं गमः ॥'

वक्रोक्तिगर्विता द्विधा—सौन्दर्यगर्विता प्रेमगर्विता च ।

आद्या यथा—

'अङ्गदरचनां प्रमदाः समदाः कुर्वन्तु रमणतोषाय ।
अपसारितनेपथ्यां जीवातुं मा प्रियो मनुते ॥'

द्वितीया यथा—

'अन्यास्ताः सखि योषितः सहचरं लावण्यलीलाग्रहाः
सेवाभिः प्रचुराभिरुन्मिषदुरुप्रेमाणमातन्वते ।
अस्माकं तु समीरणं वितनुते चेलाञ्चलैरादरा-
द्वीटीमाननपङ्कजे विसृजति प्राणेश्वरः किं क्रिये ॥'

मानवती यथा । प्रियापराधसूचिका चेष्टा मानः । स च लघुर्मध्यो गुरुश्चेति त्रिधा । तत्र पराङ्गनादर्शनजन्मा भूषणदानाद्यपनेयो लघुः । गोत्रस्खलनादिजन्मा शपथादिकष्टापनेयो मध्यमः । परस्त्रीसंगमजन्मा चरणपातादिकष्टतरापनेयो गुरुः । असाध्यस्तु रसाभासः ।

लघुर्यथा—

'पश्यत्यन्यकुटुम्बिनी प्रियतमे रोषैरलं सुभ्रते
मल्लीकाननचारिषट्पदयुवा शक्यो निरोद्धुं कुतः ।
स्याते गण्डतटेऽथ कण्टकचिते स्वेदाम्बुभिः पिच्छ[च्छि]ले
स्थातु सुन्दरि वेपिनि स्तनतटे शक्यो नु मानः कथम् ॥'

मध्यो यथा—

'लीलाविलासमधुराक्षि मया द्वितीया
कामालसेन तव साध्वभिधा व्यधायि ।
चेदन्यथाद्भुतपयोधरशातकुम्भ-
शम्भू कृशोदरि भृशं समुपस्पृशेयम् ॥'

गुरुर्यथा—

'वक्षो वीक्ष्य ममैणशावकदृशा कस्तूरिकाचर्चितं
यावद्यावकशोणकोणकलुषे कोपात्कृते लोचने ।
तावन्नैजकिरीटकोटिविलसद्रत्नाङ्कुरौघैर्मया
पादद्वन्द्वपयोजयोर्वरतनोः क्लृप्तैव नीराजना ॥'

रसाभासो यथा—

'दत्तान्याभरणानि नुचममिलैर्घर्माम्बु तालोत्थितै
रेणुस्त्वत्पदयोः सरोजवदने संमार्जितो मूर्धजैः ।

फाकूक्तिमवणेन च प्रणयिना स्वागः प्रमाणीकृतं
एतेनापि न याति हन्त कियता मानस्तवापैष्यति ॥'

एताश्च सर्वा अपि प्रत्येकमवस्थाभिरष्टविधाः—वासकसज्जा, विप्रलब्धा, खण्डिता, उत्का, कलहान्तरिता, अभिसारिका, स्वाधीनपतिका, प्रोषितपतिका चेति । मुग्धाया लज्जाप्राधान्यान्मानाभावाच्च नैते भेदा इति कश्चित् । वस्तुतस्तु खण्डितात्वमयो(जिक)[जकं] परभोगचिह्नितप्रियागमनमतो मुग्धायामपि तत्संभवः । इतरेषां तु सख्यादिप्रकरणकृतचेष्टादिना संभव इति । तत्र प्रियागमनावसरे आत्मानं मण्डयति रतिसामग्रीं च सज्जीकरोति सा वासकसज्जा । तदुक्तम्—'मुदा वासकसज्जा स्वं मण्डयत्येष्यति प्रिये ।' एतेन योगसत्त्वात् लक्षणसत्त्वाच्चागमिष्यत्पतिकाप्यत्रैवान्तर्भवतीत्यपि सूचितम् ।

स्वीया वासकसज्जा यथा—

'अमार्जि शयनस्थली सह तया प्रतीकैर्निजै-
रधूपि भवनं क्रमाच्चिकुरधोरणीभिः सह ।
अगुम्फि बकुलावली सह मनोरथैरुद्गतै-
रबन्धि वलभीगृहे सह विलोचनैस्तोरणम् ॥'

परकीया वासकसज्जा यथा—

'शुश्रूषाभिरकारि लोचनयुगं निद्रातिथि प्रेयसो-
र्नीताः कज्जलकैतवोऽपि चरमावस्थां कथंचित्तया ।
उन्मीलन्नवकाकलीकलकलैः संकेतयन्त्या मुहुः
प्रेयांस्तल्पतले सरोरुहदृशा भूयः परामृश्यते ॥'

सामान्यवनिता वासकसज्जा यथा—

'यास्यति दास्यति कुचयोरेकामेकावलीं दयितः ।
इति तौ वारवधूटी कस्तूरीभिः परिष्कुरुते ॥'

संकेतनिकेतने कपटवचनादिना वञ्चिता विप्रलब्धा ।

स्वीया विप्रलब्धा यथा—

'वयस्यावाक्यविश्वासादेत्य कुञ्जं कृशोदरी ।
दधौ शून्यवरां दृष्टिमवीक्ष्य रतिदीक्षितम् ॥'

परकीया विप्रलब्धा यथा—

'अवमत्य गुरून्सखीरपृष्ट्वा हतदूतीवचनेन काननेऽगाम् ।
नयनातिथितामियाय नाथो बत नाथः करवाणि किं विधातः ॥'

सामान्यवनिता विप्रलब्धा यथा—

'इह सुन्दरि तावदास्यतां विपुलं यावदुपानये वसु ।
इति केनचिदापणाङ्गना कितवेन प्रसभेन वञ्चिता ॥'

अन्यसंभोगचिह्निते प्रेयसीर्ष्याकुला खण्डिता ।

स्वीया खण्डिता यथा—

'अभिदर्शयितुं निजामभिख्यां परिधायांशुकमागतोऽसि तस्याः ।
श्रवसी परिनिर्वृते पुरा मे नयनद्वन्द्वमदोऽपि निर्ववार ॥'

परकीया खण्डिता यथा—

'रात्रिजागरविघूर्णितेक्षणं वीक्ष्य कान्तमरविन्दलोचना ।
उद्बभार बत लोकशङ्कया बाष्पनिर्झरमतन्त्रपक्ष्मणा ॥'

सामान्यवनिता खण्डिता यथा—

'अन्यस्यै द्रविणमदाः कथं मदर्थे
नीतं तद्विगुणमुपाहरेति भूयः ।
बाष्पाम्बुस्नुतनयनापणाङ्गनासौ
कान्तस्य द्रुतमुरसो जहार हारम् ॥'

भर्तुरनागमेन कारणं चिन्तयन्ती संतापव्याकुला उत्का ।

स्वीया उत्का यथा—

'सुचारु वान्यासु सुलोचनासु प्रसह्य नीतो दयितो नु ताभिः ।
अनागमं चेतसि चिन्तयन्ती प्राणेश्वरस्येन्दुमुखीति तस्थौ ॥'

परकीया उत्का यथा—

'आगच्छन्विनिवारितः प्रियतमः किंवा वयस्यैर्जनै-
रानेतुं न गता किमु प्रियसखी दग्धो नु पुष्पायुधः ।
प्रेयःकोकिलकाकलीकलकलप्रोद्बुद्धमीनध्वजे
नायातः परिणीतवामनयनादाक्षिण्यकः किं वने ॥'

सामान्यवनिता उत्का यथा—

'नायातः किममू विलोक्य मदनव्यापारदीक्षागुरु-
हन्ताभ्यामफलीकृतोऽद्य विपुलद्रव्योपलब्ध्युद्यमः।
उच्चैस्तत्पतितं पयोधरयुगं वाराङ्गना कञ्चुकी-
बन्धादुन्नमितुं तनोति विपुलद्रव्यागमोत्कण्ठिता॥'

चाटुप्रवणं प्रणयिनमवमत्य परितापवती कलहान्तरिता।

स्वीया कलहान्तरिता यथा—

'मम मन्दभाग्यवशतो विचारणा-
मवधीरणासु दयितस्य नाकरोः।
अयि दग्धचित्त तनुषेऽतिवेदनं
परिदेवनं किमिति हन्त संप्रति॥'

परकीया कलहान्तरिता यथा—

'नाकारि कर्णपथमालिजनस्य शिक्षा
न क्षालितो गुरुवचोभिरपि स्वपन्थाः।
व्रीडाविडम्बनमकार्यममुष्य हेतोः
सोऽयं मया हतधिया कलहान्निरस्तः॥'

सामान्यवनिता कलहान्तरिता यथा—

'केलिष्वपि प्रणयतो मयि मानवत्यां
रत्नैरकारि किल दुर्दिनमेव येन।
तस्मिन्मया प्रियतमे कलहं सृजन्त्या
हा वञ्चितं हतधिया निजभागधेयम्॥'

कामार्ता सती स्वयमभिसरति पतिमभिसारयति वा साभिसारिका।

स्वीयाभिसारिका यथा—

'नीलं चोलमुपाकृतं जलधरध्वान्तैर्जटालेऽम्बरे
शम्पासंपतने चिराय दधिरे क्षुप्तानि गात्राण्यपि।
अङ्घ्रिः स्थापित एव शिञ्जितभिया पाथोदसंगर्जिते
कष्टं पौरसगीरणेन विदधे व्यक्तोदयश्चन्द्रमाः॥'

परकीयाभिसारिका यथा—

'फणिफणमणिरश्मिदर्शिताध्वा कृततिमिरोचितवेषमम्बुजाक्षी ।
परभयपरिमन्थरं निशासु स्तनभरभङ्गुरमध्यमेति कान्तम् ॥'

सामान्यवनिताभिसारिका यथा—

'चलच्चोलं दोलन्मणिखचितताटङ्कयुगलं
चलन्नेत्रं पत्रावलिललितगण्डस्थलमलम् ।
रणन्नूपुं पुष्यद्विपुलचुलुलोभं सुमदनं
द्रुतं केलीकुञ्जं व्रजति कृतिनो वारवनिता ॥'

ज्योत्स्नाभिसारिका यथा—

'सान्द्रां चन्द्रे विसृजति निजां चन्द्रिकां सर्वगन्त्रीं
तन्वाने च त्रिभुवनतले मुग्धदुग्धाब्धिलक्ष्मीम् ।
कृत्वा भूषामुचितविषयैर्वल्लभं का यियासु-
र्मल्लीमाल्यैर्वितरति भृशं केशपाशं सुकेशी ॥'

दिवाभिसारिका यथा—

'— —त मुदिरेधी—रि प्रसर्पति वैद्युते(?)
वनभुवि गिलत्पङ्काङ्कायां जने गतिमन्थरे ।
स्तिमितवसनं यूनोरम्भे मिपादभिसर्पतोः
प्रसरति परीरम्भारम्भः सकण्टकगण्डयोः ॥'

प्रियाभिसारणादभिसारिका यथा—

'येनावगच्छति न मे लघुतां तनोति
कारुण्यमेति च पुरा रभसेन कान्तः ।
दूति प्रपञ्चचतुरासि तथा विधेयं
प्रेमोपहासविषयं न यथा प्रयाति ॥'

नैतदन्तर्भावः । अभिसारिकात्वं न प्रियाभिसरणेनेत्यपि कश्चित् । अना-
रताज्ञाकरप्रिया स्वाधीनपतिका ।

स्वीया स्वाधीनपतिका यथा—

'तनवै बहुशो निषेधवाचं करवै यद्यपि नीविरोधनानि ।
मनुते नयनाधिदेवता मां तदपि प्राणसम कुतो नु हेतो ॥'

परकीया स्वाधीनपतिका यथा—

'तामरसोदरनयना सन्त्येव हि बहुमता स्वीया ।
छायेव मा न मुञ्चति दृष्टिर्दयितस्य किमिह न निदानम् ॥'

सामान्यवनिता स्वाधीनपतिका यथा—

'कति कति न कुरङ्गीलोचना सन्ति यासा
दिशति वचनभङ्गी कामसङ्गीतलीलाम् ।
वितरति मम वित्तं मन्मथोन्मत्तचित्त
तदपि सखि समानं वल्लभः किं निदानम् ॥'

कार्यतो दूरदेशस्थिते प्रेयसि सतापव्याकुला प्रोषितपतिका । दूर इत्युपलक्षणम् । कार्यत इतिपदस्य नायिकाज्ञातकार्यादित्यर्थेनोत्काविप्रलब्धयोर्नातिव्याप्तिः । स्वीया प्रोषितपतिका यथा—

'हलाहलाकारि पटीरमद्य हाला विलासं तनुते कृशानो ।
कथं नु कारीषकृपीटयोनेस्तुल्यास्तुषारांशुकरा भवन्ति ॥'

परकीया प्रोषितपतिका यथा—

'सद्य पाटलताभिया शशिमुखी गृह्णाति वीटीं न वा
श्रीखण्डैस्तनुते तनोर्वरतनु सा पाण्डुतानिह्नवम् ।
बाष्पं मुञ्चति कर्णकेतकरज पातच्छलान्नेत्रयो
रानन्दागिनयेन गोपयति च द्रागुद्गतं गद्गदम् ॥'

सामान्यवनिता प्रोषितपतिका यथा—

'द्रव्यस्यादृग्वल्लभश्चेदिह स्यात्किं किं द्रव्यं हा मया नार्जितं स्यात् ।
स्मारं स्मारं बाष्पधारामुदारां हाहाकारं वारनारी चकार ॥'

ननु 'प्रस्थानं वलयै कृतम्' इत्यादि महाकविप्रयोगानुसारेण प्रवत्स्यत्पतिका नवमी नायिका भवितुमर्हतीति चेन्नैवम् । योजनशतं योजनादिक-

मिवाल्पमुत्प्रेक्षितं, विप्रलम्भजनकत्वेन सजातीयभेदमवगणय्य स्वतन्त्रेच्छेन महर्षिणा ऐक्यविवक्षणात् । तदुक्तम्—'प्रवत्स्यत्पतिकाप्यत्रैवान्तर्भवति तत्त्वतः' इति । किंच प्रवासो नाम स्वावच्छिन्नदेशविभागोत्तरदेशसंयोगानुकूलं कर्म, नतूत्तरदेशसंयोग एव । मार्गे गच्छत उत्तरदेशसंयोगाभावेऽपि प्रवासित्वानाकल्पनापत्तेः । तथा च तादृशकर्मणः प्रवत्स्यत्यपि सत्त्वाद्युक्त एव प्रोषितेऽन्तर्भावः । किंच प्रवत्स्यत्पतिकायाः पृथगवस्थाभेदस्वीकारे नायिकायाश्चतुश्चत्वारिंशदधिकशतभेदापत्तिः । नचेष्टापत्तिः । अष्टाविंशत्यधिकशतभेदशंसिनः प्राचांलेखस्य वैफल्यापत्तेः । अतोपि प्राचां संपातायातसांकर्यभेदादधिकभेददर्शनात् मुग्धापरकीययोर्यथायथावस्थायोगेन न्यूनभेददर्शनाच्च । एतेन प्रवत्स्यत्पतिकामवस्थान्तरं वदतोऽष्टाविंशत्यधिकशतभेदांश्च शंसतः कस्यापि लेखः परास्तः । प्रवत्स्यत्पतिका यथा—;

'गन्तुं निश्चितचेतसि प्रियतमे नोऽजृम्भि नेत्राम्बुभि-
र्बालाया न समुच्छ्रितं बहुतरं वाच्यं प्रपञ्चैरपि ।
दृष्ट्या कातरया रयाद्धनयुताकाशवीथीमथो
वीक्ष्य प्राणसमान्तरा तु गमनव्यापारतो वारितम् ॥'

यथा वा—

'शृण्वञ्छृण्वन्कोकिलालापलीलाः पश्यन्पश्यन्किंशुकभ्रान्तभृङ्गान् ।
पच्यमानैर्मार्गकीनैः सुहृद्भिः क्रीडन्भूयो नाथ याया विदेशम् ॥'

अहितेऽपि प्रेयसि हितकारिण्युत्तमा यथा—

'शोणं नारचि लोचनं न च मनागूचे कठोरं वचो
याते मय्यरविन्दसुन्दरदृशा तल्पान्तिकं सागसि ।
श्रीखण्डद्रवसेकशीतलतरश्चक्रे जलार्द्रो मरु-
त्सृक्प्रान्तसुधासवर्णहसितैः प्रेमावलक्षीकृतः ॥'

हिताहितकारिणि प्रियतमे हिताहितकारिणी मध्यमा यथा—

'पर्यङ्कपर्यन्तमुपेयुषि द्राक्प्राणेश्वरे सागसि शोणभाजः ।
मया पदान्तस्पृशि पुण्डरीकस्पर्धिष्णवोऽस्मिन्दधिरे दृगन्ताः ॥'

हितकारिण्यपि प्रियतमे अहितकारिण्यधमा । एषैवाकारणकोपना चण्डीत्यभिधीयते । यथा—

'नान्यां पश्यति यो हि चित्तकुमुदस्यानन्दसंदोहदां
त्वामिन्दीवरसुन्दराक्षि मनुते पीयूषरश्मेः कलाम् ।
तस्मिँल्लोचनमार्गमागतवति प्रेयस्यनागस्यपि
व्यर्थं विद्रुमभङ्गभङ्गिसदृशा क्रूरे दृशा क्रुध्यसि ॥'

प्रत्येकमासां त्रयो भेदा ग्रन्थविस्तरभयान्नोदाहृता ग्रन्थान्तरादुन्नेयाः । आसां साहित्यः सखी दूती चटी चेति । दास्यादीनामत्रैवान्तर्भावः । स्वयं दूत्यास्तु नायिकात्वेन सहायत्वाभावात् वाग्विदग्धायामन्तर्भाव इत्यपरे । तत्र पार्श्वचारित्वे सति विश्वासकारिणी सखी । तस्याश्च मण्डनशिक्षोपालम्भपरिहासादीनि कर्माणि । मण्डनं यथा—

'निसर्गनीलोत्पलकान्तिहारि बिडम्बये कज्जलतः किमक्षि ।
इत्थं सखीं मण्डनतः परार्चां साचीकृतास्या सुमुखी न्यविक्षत् ॥'

शिक्षा यथा—

'यासि विकर्तनसूनोस्तटभुवि वंशीस्वनं श्रोतुम् ।
किंतु सरन्ति सरंहो वनिताधरपानलोलुपा मधुपाः ॥'

उपालम्भो यथा—

'तव सुभग सहस्रं सन्ति पङ्केरुहाक्ष्यः
प्रणयतरलचेतास्त्वं ततो नापराधः ।
स्मितसहचरतिर्यग्भ्रूविभङ्गप्रणाली
दिशति सहचरीणां पञ्चतां पङ्कजाक्ष्याः ॥'

परिहासो यथा—

'आर्यावर्तस्तव हृदि मुक्ताहारः स्थितोऽस्त्ययं मुक्तौ ।
हिमविन्ध्यशैलयोरिव कुचयोरन्तः करेण वा कस्य ॥'

सख्याः परिहासवत्प्रियाया अपि परिहासो यथा—

'निजोरसि प्रेयसि सस्मितेऽस्मिन्दृष्ट्वं पुरस्तन्वति पङ्कजाक्ष्याः ।
संवदगुष्टघाय तयापि नूनं सहासमङ्गुष्ठनटोऽभ्यनर्ति ॥'

प्रियापरिहासवत् प्रियस्यापि परिहासः । स यथा—

'धन्येन चामीकरशङ्करोऽयमभ्यर्चितः सुन्दरि किंशुकेन ।
इति स्वदत्तं नखलक्ष्म कान्ते स्तुवत्यसावानमिताननासीत् ॥'

दूत्यव्यापारपारङ्गमा दूती । सा च पत्रहरत्वसंदेशहरत्वनिसृष्टार्थत्वधर्मैस्त्रिधा । निसृष्टार्थत्वलक्षणमुक्तं भरतेन—'स्त्रियः पुंसोऽथ वा ज्ञात्वानुरागं स्वमनीषया । साधयेत्कार्यशेषं या निसृष्टार्थेति तां विदुः ॥' तस्यास्तु विरहावस्थानिवेदनं संघट्टनं चेति कर्म । उपालम्भोऽपि दूतीकर्मेत्येके । तस्य विरहावस्थाकथनेऽन्तर्भाव इत्यन्ये । तत्र विरहकथनं यथा—

'त्वद्विश्लेषे मृगाङ्कं पिकरचितकुहूभाषितैर्भीषयन्ती
मूर्छत्येवाब्जपत्रप्रतिभटनयना हन्त तेषां रुतेषु ।
किं घर्मोऽकाण्ड एव प्रलपति दयित प्राणनाथेति भूयो
जिह्रेति व्यस्तवाचः सुभग समुदितां तां तनुस्वामवस्थाम् ॥'

संघट्टनं यथा—

'क्रीडामपाकुरु तिरस्कुरु भीतिमारा-
दाराधये मनसिजं मदनालसाक्षि ।
कुञ्जोदरे दरचलन्मरुति प्रतीक्षां
दामोदरस्तव तनूदरि संतनोति ॥'

अथासामलंकाराः ।

'यौवने सत्त्वजाः स्त्रीणामलंकारा दशाष्ट च ।
भावो हासश्च हेला च त्रयमत्र शरीरजाः ॥
शोभा कान्तिश्च दीप्तिश्च माधुर्यं च प्रगल्भता ।
औदार्यं धैर्यमित्येते सप्त भावाः स्वभावजाः ॥
लीलाविलासो विच्छित्तिर्विभ्रमः किलकिञ्चितम् ।
मोट्टायितं कुट्टमितं बिब्बोको ललितं तथा ॥
विहृतं चेति विज्ञेया दश हावाः शरीरजाः ॥'

तल्लक्षणानि—

'निर्विकारात्मकात्सत्त्वाद्भावस्तत्राद्यविक्रिया ।

आद्यविक्रियेयत्कटाक्षादिः ।

अल्पालापः स शृङ्गारो हावोऽक्षिभ्रूविकासकृत् ॥

भ्रूविकासकृदितिपदान्नातिविकारः पूर्वस्मिन्निति सूचितम् ।

'स एव हेलासु व्यक्तः शृङ्गाररससूचकः ।'

स एव हाव एव । तत्र

'रूपयौवनलालित्यभोगाद्यैरङ्गभूषणम् ।'

'अकुङ्कुममकेसरं ललितमण्डनं तन्वृणा-

मचन्दनमचन्द्रकं हृदयशैत्यसंदोहदम् ।

वयः किमपि मान्मथं विजयशस्त्रमत्यद्भुतं

विना कनकमङ्गदं वरतनोस्तनौ जृम्भते ॥'

'शोभा प्रोक्ता सैव कान्तिर्मन्मथाप्यायितद्युतिः'। मदनविस्तारिता द्युतिरित्यर्थः।

यथा—

'त्रिभुवनमानसहंसी युवनयनचकोरपौर्णमासीयम् ।

कस्य न वा कुसुमेषोर्नटशाला हरति मानसं बाला ॥'

कान्तिरेवातिविस्तीर्णा दीप्तीरित्यभिधीयते । लावण्यस्यात्रैवान्तर्भावः । नच माधुर्यमप्यत्रैवान्तर्भवतीति वाच्यम् । प्राचां लेखेषु भिन्नतया परिगणितत्वात् । वस्तुतस्तु अल्पभेदाच्छोभादीप्तिकान्तिमाधुर्याणामैक्यमेव ।—नामानुरोधाल्लिख्यते । दीप्तिः यथा—

'परिपाकः सुकृतानां यूनां चेतोवशीकरणमन्त्रः ।

त्रिभुवननयनाकर्षणमस्या दीप्तिः समुल्लसति ॥'

सर्वावस्थाविशेषेषु माधुर्यं रमणीयता यथा—

'सा मण्डने विनैव स्रवति वरोरूर्वयस्य लावण्यम् ।

जातु सितापि सुधायास्तनोति किं वा रसोत्कर्षम् ॥'

निःसाध्यसत्वं प्रागल्भ्यं यथा—

'आलिङ्गनैरुरसिजप्रथिमादिभिर्द्राग्

भ्रूभङ्गभङ्गुरविलोचनवेल्लितैश्च ।

सस्मेरहासलपनैर्लपनैर्भुजिष्य-
मातन्वते हृदयवल्लभमिन्दुमुख्यः ॥'

औदार्यं विनयः । स यथा—

'न परुषाक्षरमुल्लपितं पुनर्भ्रुकुटियुग्ममकारि न भङ्गुरम् ।
मयि कृतागसि केवलमेतया विनतया भुवि संदधिरे दृशः ॥'

मुक्तात्मश्लाघना धैर्यं मनोवृत्तिरचञ्चला । यथा—

'दहतु दहतु सद्यः शर्वरीशः शरीरं
वितरतु रुजमारान्मानसे मीनकेतुः ।
कथय कथमथाहं हन्त तस्यानुरागा-
त्कुलमहह कलङ्काक्रान्तमेतत्करोमि ॥'

अथ हावाः । तत्र लीला—

'अङ्गैर्वेषैरलंकारैः प्रेमनिर्वचनैरपि ।
प्रीतिप्रयोजितैर्लीलां मियस्यानुकृतिं विदुः ॥'

प्रीतिप्रयोजितैरित्यनेन परिहासानुकरणे नातिव्याप्तिः ।

यथा—

'वेणीबन्धकपर्दमौक्तिकलताखर्लौककल्लोलिनी
सिन्दूरस्फुटभालनेत्रहुतभुक्श्रीकण्ठभस्माञ्चिता ।
पातु व्यालवती मृणालवलयैर्वैडूर्यकण्ठाङ्गद
व्याबल्गद्रुचिनीलकण्ठसुषमा गौरी गिरीशाकृतिः ॥'

अथ विलासः । तत्त्वं चेष्टदर्शनसमानकाली[नि]न्द्रियविकारविशेषवत्त्वम् ।

तदुक्तम्—

'यानस्थानासनादीनां मुखनेत्रादिकर्मणाम् ।
विशेषेषु विकारः स्यादिष्टसंदर्शनादिना ॥'

यथा—

'सदसि सहचरीणामुल्लसत्पाणिवीणा
सकलरसधुरीणा गातुमारब्धुमैच्छत् ।

मयि गतवति तत्र प्रोल्लसत्पद्मपत्र-
मतिभटपटुनेत्रप्रेङ्खितान्याविरासन् ॥'

यथा वा—

'भाषणभूषणगमनैरनुकुरुते मे सखीषु सा याता ।
याति मयि तत्र तावद्बभूव तेष्वेव किमपि वैजात्यम् ॥'

अथ विच्छित्तिः । तत्त्वं स्वल्पीयसा भूषणेन शोभातिशयपोषकत्वम् । तदुक्तम्—

'स्तोकाप्याकल्परचना विच्छित्तिः कान्तिपोषकृत्।' इति ।

यथा—

'सितं धौतं वासो वपुषि नयने कज्जलविधि-
र्नवा वीटी वक्त्रे चरणयुगलेऽलक्तकरसः ।
कपोले पत्राली वनहरिणपारिप्लवदृशां
न भूषा पोषाय स्मरणजनुषः किं प्रभवति ॥'

अथ विभ्रमः । तत्त्वं व्युत्क्रमकल्पिताकल्पादिमत्त्वम् । तदुक्तम्—

'अस्थाने भूषणादीनां विन्यासो विभ्रमः स्मृतः ।'

यथा—

'याते त्वय्यरविन्दसुन्दरदृशा भालेऽञ्जनं श्रोत्रयो-
र्लाक्षारञ्जनमेणनाभिरचना बिम्बाधरे चारचि ।
काञ्ची किंच गलेऽथ मौक्तिकलताहारो नितम्बे पदे
केयूरं कचधोरणीधिषणया बद्धश्च चेलाञ्चलः ॥'

अथ किलकिञ्चितम् । तत्त्वं भावास्कन्दितधर्मवत्त्वम् । न च भावसंकरेऽतिव्याप्तिः; तत्र भावानामनैयत्यात् । मन्मते तु 'क्रोधाश्रुभीतिहर्षादेः संकरः किलकिञ्चितम्' इत्यभिहितत्वान्नियमः । अविशेषादनयोः पर्यायतेत्यपि कश्चित् । क्रोधादिचतुष्टयवृत्तिद्वावत्त्वसाक्षाव्द्याप्यजातिमत्त्वमित्यवगतिः । तथा च न दोषगन्धोऽपि । यथा—

'अरुणतरललोचनं सुकेश्याः सवदुरुबाष्पपयःप्रमग्नगण्डम् ।
अकलितविशदस्वभावहृद्यं स्मरमधुरं किमपि स्मरामि तस्याः ॥'

अथ मोट्टायितम् । तदुक्तम्—

'सद्भावभाविते चित्ते ललनस्य कथादिषु ।
मोट्टायितमिति प्राहुः कर्णकण्डूयनादिकम् ॥'

यथा—

'तव सुभग गुणानां वर्णनाकर्णनायां
कलयति कमलाक्षी कर्णकण्डूयनानि ।
अथ कथमपि कुड्मलोचनं जृम्भमाणा
रचयति भुजवल्लीवेल्लितैस्तोरणानि ॥'

अथ कुट्टमितम् । तत्त्वं च कामचेष्टादौ निषेधपूर्वकशिरःकम्पादिशालित्वम् । तदुक्तम्—

'आनन्दान्तं कुट्टमितं कुप्येत्केशाधरग्रहे ।' इति ।

यथा—

'सकचग्रहमब्जलोचनायाः कुचकूले नखरं ददत्यभीष्टे ।
न न मेति रुजेव मन्दमन्दं सशिरःकम्पमुदीरितं मुखेन ॥'

अथ बिब्बोकः । तत्त्वं च गर्वातिशयादवधीरिताभीष्टत्वम् । चण्डकोपेऽतिव्याप्तिवारणाय गर्वेति । तदुक्तम्—

'बिब्बोकस्त्वतिगर्वेण वस्तुनीष्टेऽप्यनादरः ।'

यथा—

'अवलेपलेपलोलितलोचनवृत्तिश्चिराय मच्चेतः ।
कृन्तत्यभीष्टवस्तुन्यवहेला कापि पद्मदृशः ॥'

अथ ललितम् । तत्त्वं च सौकुमार्यव्यञ्जकचेष्टावत्त्वम् । तदुक्तम्—

'सुकुमारतयाङ्गानां विन्यासो ललितं स्मृतम् ॥'

यथा—

'मनो यूनां मा भूद्दलितमिति पादान्तरचरं
किमु क्षोणीपृष्ठे रचयति पदं कोमलतया ।
भुजं मल्लीवल्लीकुसुमचयनेऽपि श्रमवशं
कुरङ्गाक्षी कण्ठप्रणयिनमभीष्टस्य कुरुते ॥'

अथ विहृतम्। तत्त्वं चासदृशचेष्टावत्त्वम्। तदुक्तम्—

'वक्तव्यकालेऽनुक्तं यद्व्रीडया विहृतं हि तत्।'

यथा—

'दूरायातेन मया वार्ता वार्तानुशंसिनी पृष्टा।
नाचष्ट किं तु विदधे जलप्लुते लोचने सुमुखी॥'

यथावा—

'न शृणोषि सुरानमुञ्शिवादीन्न च दैत्यान्कतरस्तवास्ति चित्ते।
गुरुणेति मुहुर्निरुध्य पृष्टे विहृतं सागरजन्मनोऽवतान्नः॥'

एषां स्वातन्त्र्येणैव रसोपकारकत्वं न पारतन्त्र्येणेति वामनमतम्। तत्तु वामनमेव। तथाहि। किं नाम स्वातन्त्र्यम्। रसप्रकृतिकत्वमुत व्यभिचारित्वम्। नाद्यः। तेषां स्थायिभावभूतायां रतावनन्तर्भावात्। किंच व्यभिचारित्वं रसान्तरसंचरणशालित्वम्। तच्चैषां शृङ्गारोपयोगितयानुपपन्नम्, सामानाधिकरण्येन तदुपयोगित्वमिति परमार्थः। तत्त्वं च जातिविशेष इत्येके। जात्यभाव इत्यपरे। परे तु हावत्वभावत्वमखण्डोपाधिरित्यङ्गीचक्रुः। लीलादिवृत्तिसंयोगोपाधिधर्मवत्त्वमिति रहस्यम्।

अथ विप्रलम्भे दशावस्था भवन्ति। ताश्चाभिलाषचिन्तास्मृतिगुणकीर्तनोद्वेगप्रलापोन्मादव्याधिजडतानिधनानि। तत्र सङ्गेच्छाभिलाषः। यथा—

'खञ्जनगञ्जननयना नयनैर्भूयश्च चर्करीति तव।
नीराजनं शरीरे तथापि तस्याः सरीसरीति रतिः॥'

दर्शनप्रकारकजिज्ञासा चिन्ता। यथा—

'गतागतैः सेह मया प्रतोली सेव्या सुधासूतिसरोरुहाक्षी।
सचन्द्रसारङ्गमदं प्रवाहं कुर्वीत वातायनवीक्षितेन॥'

प्रियाचेष्टाप्रबद्धसंस्कारजन्यं ज्ञानं स्मृतिः। यथा—

'एकेन पुष्पकबरीं कबरीं करेण
नीवीं श्लथां तदितरेण च धारयन्तीम्।
वक्षोजसीम्नि नखरक्षतमीक्षमाणां
सीत्कारशोभिवदनां ललनां स्मरामि॥'

चिरकालिकप्रियप्रशंसाप्रतिपादनं गुणकीर्तनम् । यथा—

'गुम्फः कार्तिकक्रत्तिकापरिवृढस्यन्दत्सुधासंनिभो
वाचां किंच मिलन्मिलिन्दपटलीहासक्षमे चक्षुषी ।
सा वैसारिणकेतनस्य विलसल्लीलाविलासालयो
जात्यस्वर्णसुवर्णकान्तिरतुलन्यासास्ति तस्यास्तनुः ॥'

विरहकालीना हेयताबुद्धिरुद्वेगः । यथा—

'सिक्ता मुहुश्चन्दनवारिणा द्रागान्दोलिता धीरतरं जलार्द्रा ।
शय्यादलानामपि कन्दलीनां तापाय हा पातकमिन्दुमुख्याः ॥'

मनोविकृतिजन्यप्रियाश्रयकर्तव्यव्यवहारः प्रलापः । यथा—

'किं वदिष्यति मामिन्दीवरसुन्दरलोचना ।
किं करिष्यति कुन्दाग्रसुदती दर्शनान्नु मे ॥'

विरहकालीनमनोवृत्तिजन्यप्रियाश्रितवितथव्यापार उन्मादः । स च कायिको वाचनिकश्चेति द्विविधः । आद्यो यथा—

'आशासु कोऽपि तरुणो भ्रमवीक्षितायाः
कृत्वा सरोरुहदृशो मुहुरङ्कपालीम् ।
संमार्जयन्नलिककोमलघर्मबिन्दू-
नुत्कण्टकः कलयति स्म मनोजलीलाम् ॥'

द्वितीयो यथा—

'शीतांशो वदनद्युतिं वरतनोस्त्वं हर्तुमाकाङ्क्षसे
त्वं पारीन्द्र विलग्नकान्तिपटलीमेण त्वमक्ष्णोः श्रियम् ।
बद्धो वाञ्जलिरेष पेशलमिदं नैवास्ति युष्मादृशां
तद्यूयं व्रजत प्रयात विषयं नो मार्गणानां मम ॥'

विरहजनितशरीरतान्तिर्व्याधिः । यथा—

'आधिस्तनोति सुतनोस्तनुतानवानि
व्याधिर्दिशत्यविरतं विषमामवस्थाम् ।
नो तादृशानि दुरितानि पुराकृतानि
धन्वी पुरः सरति यत्कुसुमायुधोऽपि ॥'

अपिच—

'नापैति या नागरचित्रपन्था (?) गुडूचिकाक्षौद्रभवौषधेन।
नासत्यतामेत्य नवीनयोगैर्हरे हराम्भोजदृशस्त्वमार्तिम्॥'

विरहजन्यकायचेष्टाविरहो जडता। यथा—

'यादव यादव किं वा ब्रूमः सुदृशो बतावस्थाम्।
उच्चरिते तव नामनि जीवति सुदतीतिजानीमः॥'

निधनस्य विरहादमङ्गलत्वाच्च न तद्वर्ण्यम्। आलम्बनविभावानुक्त्वा प्रसङ्गादुद्दीपनविभावा निरूप्यन्ते। ये रसमुद्दीप्य विभावयन्ति त उद्दीपनविभावाः। तेषां च रसं प्रत्युद्दीपनत्वेन कारणत्वम्। ते च ऋतुचन्द्रमलयानिलाद्या वेद्याः।

ऋतुषु वसन्तो यथा—

'गुञ्जद्द्विरेफमधुरे कलकण्ठकण्ठ-
पीयूषपानचतुरे कुसुमाकरेऽस्मिन्।
खेलत्ययं युवजनेषु नितान्तरक्तो
मन्दं मृगाक्षि मृगयां मुदितो मनोभूः॥'

ग्रीष्मो यथा—

'शिरीषसंसर्गिसुगन्धिशीतसमीरणेऽस्मिन्सुभगावगाहे।
सिते पटीरे इव पङ्किलाङ्के पयोधरे पद्मदृशां मनोभूः॥'

वर्षा यथा—

'सौदामिनीकनकदामविभूषिताङ्गी
कादम्बिनी गजघटेव मनोजराजः।
आसारपातविशदीकृतदानपूरा-
न्न········कस्य मनसो मुदमादधाति॥'

शरद्यथा—

'यातं सज्जनचित्तवद्विगलताम्भः प्रसन्नं नभः
कालुष्यं गुरुशिक्षयेव न मनागम्भोधराः संदधुः।

चेतांसीव सरांसि हंसललितान्यासन्भृशं योगिनां
जातं किं विशदं न वेत्ति विशति स्त्रीणां मनो मन्मथः ॥'

हेमन्तो यथा—

'ह्रसति दिवसो मानैः साकं सरोरुहचक्षुषां
व्रजति रजनी वृद्धिं प्रेमप्रपञ्चरसैः सह ।
भवति च रुचिः सार्धं चित्ते चकोरचमूचयैः
स्वपिति तरुणैश्चेतोजन्मा समं कुचभूमिषु ॥'

शिशिरो यथा—

'व्रणयन्नधरं प्रकम्पयंस्तनुमङ्गं च सृजन्सकण्टकम् ।
असहन्कुचपत्रवल्लरीं शिशिरः पश्चदशां प्रियागमः ॥'

चन्द्रो यथा—

'प्राचीभालविशेषकं सुचषकं दिक्सुन्दरीणामिदं
क्रीडाकन्दुकमिन्दुलोकसुदृशां काश्मीरपङ्काङ्कितम् ।
मानोन्मूलनकार्मणं रतिपतेः कालार्भकक्रीडनं
यामिन्याः करभोरु पश्य पुरतः सौभाग्यमुज्जृम्भते ॥'

मलयानिलो यथा—

'भृङ्गश्रेणीकृपाणीसरसिरुहवनीधूलिभिर्धूसराङ्गः
पम्पासंपातकम्पस्खलितगतिरलं माधवीमल्लिकासु ।
मन्दं मन्दं विसर्पन्मलयगिरिदरीगह्वरेभ्यो दुकूलं
कर्षन्कर्णाटकान्ताकुचकलशगतं वाति मत्तः समीरः ॥'

अनुभावा व्यभिचारिभावाश्च ग्रन्थान्तरेषूह्याः । इह ग्रन्थगौरवान्न लिखिताः ।

इति श्रीमत्कविकुलतिलकनरहरिविदुषोऽनुजन्मना सामराजदीक्षितविरचिता
शृङ्गारामृतलहरी समाप्ता ।

---